विद्यादानसमितिरचनाराजेः प्रथमकुसुमम्

# अमरकोश-संग्रहः

## बालक्रीडा–रचना

# AMARAKOŚA

**Abridged & Sequelized for Baby's Delight**

**by**

**Vidya Dana Samiti Workers Panel**

"ज्ञानं मोक्षे धीः सद्विवेकभराज्ज्ञानम्

बोधशक्तिग्रहायत्त एव विवेकः ।

व्याकरणोपमानकोशाप्तवाक्येभ्यः

- व्यवहराच्च शक्तिग्रह" इति बुधाः ॥

1980


प्रतिप्राप्तिशाला :

नं. १३, II मैन् रोड्, शेषाद्रिपुरम्,

बेङ्गलूर–२०

Copies Available from :

NO. 13, IInd MAIN ROAD,

SESHADRIPURAM, BANGALORE-20

PIN 560 020

Price Rs. 3-00

# PREFACE

**प्रदीपवेलाप्रगायनार्थम्। प्रकाशितेयं प्रभासुरार्चिः ॥**

Here's a Challenge to you, young Educated Mother ! Take it up in earnest. You love your five-year old, to be sure. We love the baby too, for we love our Motherland, its rich cultural heritage, the language through which it has been expressed, and we want this tomorrow's citizen to inherit it and enjoy it to the fill.

Perhaps you are a "career" woman, or just the domestic type ; it makes no difference. We ask you to find some fifteen minutes every evening at lamp-light hour. Light the family oil lamp in front of your family deity. Seat yourself at ease close by and keep the baby on your lap. Open this Vidya gift of ours and take the names of the Lord as presented there—not more than three lines a day. Sing loud enough for the baby to hear and coax it to recite with you ; a fresh three lines every evening. See you don't tax the little one. Play the recitation with him/her. The baby will memorize it faster than you. Guard the diction of the baby, for correct diction is the soul of any language.

Work your baby's progress up this way. Keep it up for six months, uninterruptedly. (Watch your own progress too.) This day six months you will feel prouder of your baby than ever before, for, by then it will have memorized a good most useful 600 lines of this thin booklet. This memory will outlast his sixties, still a very, very long way off. He/she will bless you then for your loving gift. Even in the unlikely event of its going in for a language other than Sanskrit at school, this solid vocabulary will help to

grasp the regional language or Hindi quicker and clearer. You know, of course, Sanskrit is the stem off which have shot out all our languages.

Tell your good neighbour the Vidya Dana Samiti is keen to help her baby too, and ask her to pick up her copy from the Samiti office. Don't bother lending your copy to her; you will need it for your next baby soon to be five, that is, if you have not planned your family long before!

**To the General Reader**

Here's the result of a labour of love. Vidya Dana Samiti believes with our great ancestors that Vidya is priceless. To the one who devotedly seeks it, it has to be made available at least cost. So this booklet is token-priced, thanks to a substantial cash subsidy from the Samiti's well-wishers. The deservedly popular Amarakosa has been regrouped and sequelized for easy reference and study. All specialist matter has been scissored off. We don't expect you will memorize it, many of you are long past that age; but read it, a few lines a day, more in the spirit of Sabda Brahman parayana, if possible, at a fixed hour every day. After a few rounds of reading, you will find you have learnt enough to familiarize yourself with our great composers of the Puranas and classics. They will bless you for your effort to keep their memory fresh. Your young hopeful too will be tempted to follow in your good foot-steps.

This is the Samiti's maiden effort; it has other ambitious plans up its sleeve, the Lord willing, to help create a love for Sanskrit. The Samiti Workers Panel has opted for anonymity, but Dharma would be cheated without a word of gratitude to Smt. Nirmalaji Holla, M.A., whose infectious enthusiasm has helped to get this matter in print.

**To the Scholar Critic:**

Pray go through this brief booklet, ye Masters of Sanskrit, with sympathy and help the Samiti with constructive ideas to improve itself. Don't brand the Samiti a vandal. Regrouping of major works is not new. While two Maharshis would not violate the Master's Ashtadhyayi arrangement, the great Bhattoji thought otherwise, and the Siddhanta Kaumudi is standard today. No Kosa claims to be a substitute for grammar or the lexicon, so the Samiti has not trespassed into either of these regions.

**How to Read the Kosa:**

Such as those whose acquaintance with Sanskrit is but slight may find the following note helpful to grasp the lines better. Almost all groups of synonyms have English equivalents on the margin. Sandhi (joining words in contiguity to form a single long or short expression) is widely employed in Sanskrit. To the beginner this is a poser, but repeated reading will soon resolve it. A few oft-occurring words are explained below: The 'Topics' page should help in locating a word in its relevant context.

पुमान्-पुंसि-ना masculine (m.)

स्त्री-स्त्रियाम् feminine (f.)

द्वयोः m. & f.

क्लीबे neuter (n.) अस्त्रियाम् m. & n. न ना f. & n.

त्रिषु in all genders अव्ययम् indeclinable वा or, तु but starts a new group.

च-अपि and/also (the word to which these are attached concludes that group.)

सत्त्वगामि adjective.

स्यात्-स्युः shall be (word/s following are synonyms).

# TOPICS

*(Line numbers are given within brackets)*

॥ श्री कृष्णपरमात्मने नमः ॥

॥ श्री गणेशाय नमः ॥  ॥ श्री गुरुभ्यो नमः ॥  ॥ श्री महासरस्वत्यै नमः ॥

# अमरकोष-संग्रहः

(बालक्रीडा-रचना)

यस्य ज्ञानदयासिन्धोरगाधस्यानघा गुणाः ।
सेव्यतामक्षयो धीराः स श्रियै चामृताय च ॥

HE be worshipped, Oh, ye wise ! for happiness here
and hereafter,
Devoid of demerits, deep Sea of Wisdom, Grace,
knows no decay HE !

१ विनायको-विघ्नराज-द्वैमातुर-गणाधिपाः । (Vinayaka)
२ अप्येकदन्त-हेरम्ब-लम्बोदर-गजाननाः ।
३ शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः । (Siva)
४ ईश्वरः शर्व ईशानः शंकरश्चन्द्रशेखरः ।
५ भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः ।
६ मृत्युञ्जयः कृत्तिवासाः पिनाकी प्रमथाधिपः ।
७ उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत् ।
८ वामदेवो महादेवो विरूपाक्षस्त्रिलोचनः ।
९ कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः ।
१० हरः स्मरहरो भर्गः त्र्यम्बकस्त्रिपुरान्तकः ।
११ गंगाधरोऽन्धकरिपुः क्रतुध्वंसी वृषध्वजः ।
१२ व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः ।

१३ अहिर्बुध्न्योऽष्टमूर्तिश्च गजारिश्च महानटः ।
१४ कपर्दोऽस्य जटाजूटः पिनाकोऽजगवं धनुः ।
१५ विभूतिर्भूतिरैश्वर्यं अणिमादिकमष्टधा ।
१६ अणिमा महिमा चैव गरिमा लघिमा तथा । (Siddhis)
१७ प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः ।
१८ भृङ्गी भृङ्गी रिटिस्तुण्डी नन्दिको नन्दिकेश्वरः । (Nandi &c.)
१९ प्रमथाः स्युः पारिषदा ब्राह्मीत्याद्यास्तु मातरः ।
२० ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
२१ वाराही च तथेन्द्राणी चामुण्डा सप्तमातरः ।
२२ उमा कात्यायनी गौरी काली हैमवतीश्वरी । (Uma)
२३ शिवा भवानी रुद्राणी शर्वाणी सर्वमङ्गला ।
२४ अपर्णा पार्वती दुर्गा मृडानी चण्डिकाम्बिका ।
२५ आर्या दाक्षायणी चैव गिरिजा मेनकात्मजा ।
२६ कर्ममोटी तु चामुण्डा चर्ममुण्डा तु चर्चिका ।
२७ कार्तिकेयो महासेनः शरजन्मा षडाननः । (Shanmukha)
२८ पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः ।
२९ बाहुलेयस्तारकजिद्विशाखः शिखिवाहनः ।
३० षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः ।
३१ विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः । (Vishnu)
३२ दामोदरो हृषीकेशः केशवो माधवः स्वभूः ।
३३ दैत्यारिः पुण्डरीकाक्षो गोविन्दो गरुडध्वजः ।
३४ पीताम्बरोऽच्युतः शार्ङ्गी विष्वक्सेनो जनार्दनः ।
३५ उपेन्द्र इन्द्रावरजश्चक्रपाणिश्चतुर्भुजः ।
३६ पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रमः ।

३७ देवकीनन्दनः शौरिः श्रीपतिः पुरुषोत्तमः ।
३८ वनमाली बलिध्वंसी कंसारातिरधोक्षजः ।
३९ विश्वम्भरः कैठभजिद्विधुः श्रीवत्सलाञ्छनः ।
४० पुराणपुरुषो यज्ञपुरुषो नरकान्तकः ।
४१ जलशायी विश्वरूपो मुकुन्दो मुरमर्दनः ।
४२ लाञ्छनं लक्ष्मीपतेः श्रीवत्सो मणिस्तु कौस्तुभः ।
४३ शङ्खः पाञ्चजन्यश्चक्रं सुदर्शनं कौमोदकी । (Conch & Weapons)
४४ गदा खड्गो नन्दकः चापश्च शार्ङ्गमिति स्मृतः ।
४५ अश्वाश्च शैब्यसुग्रीव मेघपुष्प बलाहकाः । (Chariot, Horses)
४६ सारथिर्दारुको मन्त्री ह्युद्धवश्चानुजो गदः ।
४७ वसुदेवोऽस्य जनकः स एवानकदुन्दुभिः ।
४८ गरुत्मान् गरुडस्ताक्ष्र्यो वैनतेयः खगेश्वरः । (Garuda)
४९ नागान्तको विष्णुरथः सुपर्णः पन्नगाशनः ।
५० बलभद्रः प्रलम्बघ्नो बलदेवोऽच्युताग्रजः । (Balabhadra)
५१ रेवतीरमणो रामः कामपालो हलायुधः ।
५२ नीलाम्बरो रौहिणेयस्तालाङ्को मुसली हली ।
५३ सङ्कर्षणः सीरपाणिः कालिन्दीभेदनो बलः ।
५४ मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः । (Pradyumna)
५५ कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः ।
५६ शम्बरारिर्मनसिजः कुसुमेषुरनन्यजः ।
५७ पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभूः ।
५८ अरविन्दमशोकं च चूतं च नवमल्लिका । (Kama's arrows & bows)
५९ नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ।
६० उन्मादनस्तापनश्च शोषणस्तम्भनस्तथा ।

६१ संमोहनश्च कामस्य पञ्चबाणाः प्रकीर्तिताः ।
६२ ब्रह्मसूर्विश्वकेतुः स्यादनिरुद्ध उषापतिः । (Aniruddha)
६३ लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया । (Lakshmi)
६४ इन्दिरा लोकमाता मा क्षीरोदतनया रमा ।
६५ भार्गवी लोकजननी क्षीरसागरकन्यका ।
६६ ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः । (Brahma)
६७ हिरण्यगर्भो लोकेशः स्वयम्भूश्चतुराननः ।
६८ धाताब्जयोनिर्द्रुहिणो विरिञ्चिः कमलासनः ।
६९ स्रष्टा प्रजापतिर्वेधाः विधाता विश्वसृड् विधिः ।
७० नाभिजन्माण्डजः पूर्वो निधनः कमलोद्भवः ।
७१ सदानन्दो रजोमूर्तिः सत्यको हंसवाहनः ।
७२ समावोङ्कारप्रणवौ ऋषयः सत्यवचसः । OM (sound) Rishis
७३ सप्तऋषयो मरीच्यत्रिमुखाश्चित्रशिखण्डिनः ।
७४ मैत्रावरुणी वसिष्ठोऽगस्त्यश्च सैव कुम्भभूः ।
७५ ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती । (Saraswati)
७६ श्रुतिः स्त्री वेद आम्नाय ऋक्सामयजुषी त्रयी । (Vedas)
७७ धर्मस्तु तद्विधिस्तथा स्मृतिश्च धर्मसंहिता । (Smriti)
७८ स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः । (Dharma)
७९ अस्त्री पङ्कम् पुमान् पाप्मा पापं किल्बिषकल्मषम् । (Sin)
८० कलुषं वृजिनैनोऽघमंहो दुरितदुष्कृतम् ।
८१ शिक्षेत्यादि श्रुतेरङ्गं उदात्ताद्यास्त्रयः स्वराः । (Vedangas)
८२ आन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयोः ।
८३ इतिहासं पुरावृत्तं पुराणं पञ्चलक्षणम् ।
८४ आख्यायिकोपलब्धार्था प्रबन्धकल्पना कथा ।

८५ उपन्यासस्तु वाङ्मुखं उपोद्धात उदाहारः । (Preface, Example)
८६ समस्या तु समासार्था समाहृतिः स संग्रहः । (Abridgment)
८७ सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः । (Buddha)
८८ समन्तभद्रो भगवान् मारजिल्लोकजिज्जिनः ।
८९ षडभिज्ञो दशबलोऽद्वयवादी विनायकः ।
९० मुनीन्द्रः श्रीघनश्शास्ता मुनिः शाक्यमुनिस्तु यः ।
९१ स शाक्यसिंहः सर्वार्थसिद्धः शौद्धोदनिश्च सः ।
९२ गौतमश्चार्कबन्धुश्च मायादेवीसुतश्च सः ।
९३ इन्द्रो मरुत्वान् मघवा बिडौजाः पाकशासनः । (Indra)
९४ वृद्धश्रवाः सुनासीरः पुरुहूतः पुरन्दरः ।
९५ जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः ।
९६ सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा ।
९७ वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः ।
९८ जम्भभेदी हरिहयः स्वाराण्नमुचिसूदनः ।
९९ संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः ।
१०० आखण्डलः सहस्राक्षः ऋभुक्षास्तस्य तु प्रिया ।
१०१ पुलोमजा शचीन्द्राणी जयन्तः पाकशासनिः । (Wife & Son)
१०२ स्यात् प्रासादो वैजयन्तः नगरीत्वमरावती ।
१०३ नन्दनं वनं तस्मिंश्च मन्दारः पारिजातकः । (Grove)
१०४ सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ।
१०५ ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः । (White Elephant)
१०६ हय उच्चैःश्रवाः सूतो मातलिः शक्रशस्त्राणि । (Charioteer)
१०७ ह्लादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः । (Thunderbolt)
१०८ शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः ।

१०९ व्योमयानं विमानोऽस्त्री सुधर्मा सा देवसभा ।
११० देवास्त्वमरा निर्जरास्त्रिदशा विबुधाः सुराः । (Devas)
१११ सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः ।
११२ बृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम् ।
११३ आदितेया दिविषदो लेखा अदितिनन्दनाः ।
११४ बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः ।
११५ आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धसः ।
११६ पीयूषममृतं सुधा क्ष्वेडस्तु गरलं विषम् । (Nectar-Poison)
११७ नारदाद्याः सुरर्षयः स्वर्वैद्यावश्विनीसुतौ । (Aswini-twins)
११८ नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ ।
११९ अप्सरसस्ताः स्वर्वेश्याः सुकेशी मञ्जुघोषादयः । (Apsaras)
१२० घृताची मेनका रम्भा उर्वशी च तिलोत्तमा ।
१२१ हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम् । (Gandharvas)
१२२ ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तनम् । (Dance)
१२३ तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम् । (Acting)
१२४ भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः । (Dancer)
१२५ नर्तकी लासकी समे तथा गीतं च गानं च । (Danseuse)
१२६ षड्जर्षभगान्धारमध्यमपञ्चमधैवताः ।
१२७ निषादश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ।
१२८ वादित्रे वीणा वल्लकी विपञ्ची परिवादिनी । (Veena)
१२९ कण्डोलवल्लकी सा चण्डालवीणा चाण्डालिका ।
१३० कोणो वीणादिवादनं आतोद्ये तु ढक्काभेर्यौ । (Fiddle Stick)
१३१ दुन्दुभिर्मृदङ्गमुरजे डमरुमर्दलाद्याः ।
१३२ वंशादिकं तु सुशिरं कांस्यतालादिकं घनम् । (Flute)

१३३ कालक्रियामाने तालः लयः साम्यमेकतालः ।
१३४ अङ्गहारोऽङ्गविक्षेपो व्यञ्जकाभिनयौ समौ । (Acting)
१३५ शृङ्गार-वीर-करुणाद्भुत-हास्य-भयानकाः । (Sentiments)
१३६ बीभत्सरौद्रौ च रसाः शृङ्गारः शुचिरुज्ज्वलः । (Love)
१३७ स्त्रीणां विलासबिम्बोकविभ्रमा ललितं तथा ।
१३८ हेला लीला इत्यमी हावाः क्रियाः शृङ्गारभावजाः ।
१३९ द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च ।
१४० व्याजोऽपदेशो लक्ष्यं च वीर उत्साहवर्धनः । (Valour)
१४१ उत्साहोऽध्यवसायः स्यात् कारुण्यं करुणा घृणा । (Pity)
१४२ कृपा दयाऽनुकम्पाऽनुक्रोशो विस्मय आश्चर्यम् । (Wonder)
१४३ चित्रमद्भुतं हास्ये हासहासौ आच्छुरितकम् । (Mirth)
१४४ सोत्प्रासः मध्यमे विहसितमेवं स्मितं मनाक् ।
१४५ भयानके भैरवं घोरं भीमं भीषणं भीष्मम् । (Frightful)
१४६ भयङ्करं प्रतिभयं दारुणं साध्वसं भयम् ।
१४७ भीतिर्दरस्त्रासः रौद्रमुग्रं बीभत्से विकृतम् । (Loathsome)
१४८ सुरलोकः स्वर्ग-नाक-त्रिदिव-त्रिदशालयाः । (Heaven)
१४९ द्यौ दिवौ द्वे स्त्रियां क्लीबं त्रिविष्टपम् स्वरव्ययम् ।
१५० मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका । (Mandakini)
१५१ मेरुः सुमेरुः हेमाद्री रत्नसानुः सुरालयः । (Meru)
१५२ अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः । (Agni)
१५३ कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात् ।
१५४ बर्हिः शुष्मा कृष्णवर्त्मा शोचिष्केश उपर्बुधः ।
१५५ आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः ।
१५६ रोहिताश्वो वायुसखः शिखावानाशुशुक्षणिः ।

१५७ हिरण्यरेता हुतभुक् दहनो हव्यवाहनः ।
१५८ सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः ।
१५९ शुचिरप्पित्तमौर्वस्तु वाडवो बडवानलः । (Submarine fire)
१६० दावस्तु दवो वनहुताशनः स्याद्वह्नेर्द्वयोः । (Forest fire)
१६१ ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियां स्फुलिङ्गे । (Flame)
१६२ त्रिष्वग्निकणः उल्मुकोऽलातः उल्का खेजा ज्वाला । (Meteor)
१६३ सा भग्नभात् भूतिः क्षारो रक्षा भसितभस्मनी । (Ash)
१६४ श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः । (Vayu)
१६५ पृषदश्वो गन्धवहो गन्धवाहानिलाशुगा ।
१६६ समीर-मारुत-मरुज्जगत्प्राण-समीरणाः ।
१६७ नभस्वद्वात-पवन-पवमान-प्रभञ्जनाः ।
१६८ प्रकम्पनो महावातो वात्या वातूलश्चातुलः । (Tempest)
१६९ झञ्झावातः सवृष्टिकः वायवोऽसवः प्राणाद्याः ।
१७० हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले ।
१७१ उदानः कण्ठदेशे स्याद्व्यानः सर्वशरीरगः ।
१७२ रंहस्तरसी रयः स्यदो जवो जवनो जूतिः । (Speed)
१७३ सत्वरं त्वरितं शीघ्रं लघु क्षिप्रमरं द्रुतम् । (Quick)
१७४ उच्चण्डं चपलं तूर्णमविलम्बितमाशु च ।
१७५ स्राग्झटित्यञ्जसाह्नाय द्राङ्मङ्क्षु सपदि द्रुते ।
१७६ सततानरताश्रान्तसन्ततविरतानिशम् । (Incessant)
१७७ नित्यानवरताजस्रं त्रिष्वेषां सत्वगामि यत् ।
१७८ शाश्वतस्तु ध्रुवो नित्य सदातन सनातनाः । (Eternity)
१७९ प्रचेता वरुणः पाशी यादसां पतिरप्पतिः । (Varuna)
१८० तिमि तिमिङ्गिलादयो यादांसि जलजन्तवः । (Whale, &c.)

१८१ तद्भेदाः शिशुमारोद्रशङ्कवो मकरादयः ।
१८२ ग्राहोऽवहारो नक्रः कुम्भीरः कमठकच्छपौ । (Crocodile)
१८३ द्वौ कूर्मे पृथुरोमा झषो मत्स्यो मीनश्चाण्डजः । (Fish)
१८४ विशारः शकुली चैवं गडकः शकुलार्भकः । (Fishling)
१८५ क्षुद्राण्डमत्स्यसङ्घातः पोताधानं स्यात्कुलीरः । (Shoal)
१८६ कर्कटकः शङ्खः कम्बु क्षुद्रशङ्खाश्च शम्बूकाः । (Crab, Conch)
१८७ मुक्तास्फोटः शुक्तिः मणिर्मुक्ता प्रवालं विद्रुमः । (Coral)
१८८ समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः । (Ocean)
१८९ उदन्वानुदधिः सिन्धुः सरस्वान् सागरोर्णवः ।
१९० रत्नाकरो जलनिधिर्यादःपतिरपांपतिः ।
१९१ लवणेक्षु सुरा सर्पि दधि क्षीर नीरभेदाः । (Seven seas)
१९२ भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिर्महोर्मिषु । (Wave)
१९३ उल्लोलकल्लोलौ चक्रं स्यादावर्तोऽम्भसाम्भ्रमः । (Tidal wave)
१९४ निम्नं गभीरं गम्भीरमगाधमतलस्पर्शः । (Depth)
१९५ द्वीपोऽस्त्रियां अन्तरीपं यदन्तर्वारिणस्तटम् । (Island)
१९६ नौस्तरणिस्तरिः स्त्रियामुडुपं तु प्लवः कोलः । (Ship, Raft)
१९७ नौकादण्डः क्षेपणी स्यादरित्रं केनिपातकः । (Oar)
१९८ कर्णधारस्तु नाविकः नियामकः पोतवाहः । (Boatman)
१९९ सांयात्रिकः पोतवणिक् स्यात्तरपण्यं आतरः । (Fare)
२०० नाव्यं त्रिलिङ्गं नौतार्येऽतीतनौकेऽतिनु त्रिषु । (Disembarkation)
२०१ कुबेरस्त्र्यम्बकसखो यक्षराड्गुह्यकेश्वरः । (Kubera)
२०२ मनुष्यधर्मा धनदो राजराजो धनाधिपः ।
२०३ किन्नरेशो वैश्रवणः पौलस्त्यो नरवाहनः ।
२०४ यक्षैकपिङ्गैलबिल-श्रीदपुण्यजनेश्वराः ।

२०५ चैत्ररथमुद्यानमलका पूः स्थानं कैलासम् ।
२०६ विमानं पुष्पकं तस्य पुत्रस्तु नलकूबरः ।
२०७ निधिर्ना शेवधिर्भेदाः पद्मशङ्खादयो निधेः । (Treasure)
२०८ महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ ।
२०९ मुकुन्द-कुन्द-नीलाश्च खर्वश्च निधयो नव ।
२१० स्यात्किन्नरः किंपुरुषस्तुरङ्गवदनो मयुः । (Kinnara)
२११ यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी ।
२१२ राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रप आशरः । (Rakshasa)
२१३ रात्रिंचरो रात्रिचरः कर्बुरो निकषात्मजः ।
२१४ आदित्य विश्ववसवस्तुषिता भास्वरानिलाः । (Minor gods)
२१५ महाराजिकसाध्याश्च रुद्राश्च गणदेवताः ।
२१६ विद्याधरोऽप्सरो यक्षरक्षो गन्धर्व किन्नराः ।
२१७ पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ।
२१८ द्यौदिवौ द्वे स्त्रियां अभ्रं व्योम पुष्करमम्बरम् । (Sky)
२१९ नभोन्तरिक्षं गगनमनन्तम् सुरवर्त्म खम् ।
२२० वियद्विष्णुपदम् वा पुंसि आकाशविहायसी ।
२२१ नाकतारापथौ मेघाध्वाऽव्ययेद्धुर्महाबिलम् ।
२२२ धर्मराजः पितृपतिः समवर्ती परेतराट् । (Yama)
२२३ कृतान्तो यमुनाभ्राता शमनो यमराट् यमः ।
२२४ कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः ।
२२५ स्यान्निर्ऋतिरलक्ष्मीः नारको नरको दुर्गतिः । (Nirriti, Hell)
२२६ निरयश्च वैतरणी सिन्धुः स्युर्नारकाः प्रेताः । (Denizens)
२२७ परासुः प्राप्तपञ्चत्व-परेत-मृतसंस्थिताः । (Dead)
२२८ विष्टिराजूः कारणा तु यातना तीव्रवेदना । (Torture)

ऐरावतः-अभ्रमु
इन्द्रः-रविः
पूर्वा-प्राची

सुप्रतीकः-अञ्जनावती
ईशः-बृहस्पतिः
ऐशान-उत्तरपूर्वा

पुण्डरीकः-कपिला
वह्निः-शुक्रः
आग्नेयी-दक्षिणपूर्वा




सार्वभौमः-अङ्गना
कुबेरः-बुधः
उत्तरा-उदक्

वामनः-पिङ्गला
यमः-भौमः
दक्षिणा-अवाक्

वायवी-उत्तरपश्चिमा
मरुत्-विधुः
पुष्पदन्तः-शुभ्रदन्ती

नैर्ऋती-दक्षिणपश्चिमा
नैर्ऋतः-स्वर्भानुः
कुमुदः-अनुपमा

पश्चिमा-प्रतीची
वरुणः-सौरिः
अञ्जनः-ताम्रपर्णी

२२९ असुरा दैत्य-दैतेय-दनुजेन्द्रारि-दानवाः । (Asura)
२३० शुक्रशिष्या दितिसुताः पूर्वदेवाः सुरद्विषः ।
२३१ अधोभुवन पाताल बलिसद्म रसातलम् । (Nether world)
२३२ अमूनि स्युर्दैत्यलोकाः नागलोकोऽपि तत्र हि ।
२३३ विवरं निर्व्यथनं रन्ध्रं श्वभ्रं च बिलं वपा । (Cavity)
२३४ कुहरं गर्तावटौ छिद्रं शुषिरं रोकं शुषिः ।
२३५ दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः । (Cardinal points)
२३६ प्राच्यवाची प्रतीच्यस्ताः पूर्व दक्षिण पश्चिमाः ।
२३७ एवमुत्तरादिगुदीची स्याद्दिश्यं तु दिग्भवे ।
२३८ प्राचीनमवाचीनं च प्रतीचीनमुदीचीनम् ।
२३९ क्लीबाव्ययं त्वपदिशं दिशोर्मध्ये विदिक्स्त्रियाम् । (Inter points)
२४० अभ्यन्तरन्त्वन्तरालम् चक्रवालं तु मण्डलम् । (Horizon)
२४१ इन्द्राग्नीयमनैर्ऋतौ पाशी वायुर्मयुरीशः । (Regents)
२४२ रविः शुक्रो महीसूनुः स्वर्भानुर्भानुजो विधुः । (Planets)
२४३ बुधो बृहस्पतिश्चैते पतयश्च ग्रहाः क्रमात् ।
२४४ ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः । (Elephants)
२४५ पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ।
२४६ करिण्योऽभ्रमुकपिला पिङ्गलानुपमाः क्रमात् ।
२४७ ताम्रकर्णी शुभ्रदन्ती चाङ्गना चाञ्जनावती ।
२४८ विश्वं सर्वं समं कृत्स्नं निखिलं समस्ताखिले । (Universe, Whole)
२४९ निश्शेषमशेषं पूर्णं समग्रं सकलाखण्डे ।
२५० साकल्योक्तिः पारायणं शकलं भित्तखण्डयोः । (Part)
२५१ सूर सूर्यार्यमादित्य द्वादशात्म दिवाकराः । (Sun)
२५२ भास्कराहस्करब्रध्न प्रभाकर विभाकराः ।

२५३ भास्वद्विवस्वत्सप्ताश्व हरिदश्वोष्णरश्मयः ।
२५४ विकर्तनार्कमार्तण्ड मिहिरारुणपूषणः ।
२५५ द्युमणिस्तरणिर्मित्रः चित्रभानुर्विरोचनः ।
२५६ विभावसुर्ग्रहपतिस्त्विषांपतिरहर्पतिः ।
२५७ भानुर्हंसः सहस्रांशुस्तपनः सविता रविः ।
२५८ पद्माक्षस्तेजसांराशिश्छायानाथस्तमिस्रहा ।
२५९ कर्मसाक्षी जगच्चक्षुर्लोकबन्धुस्त्रयीतनुः ।
२६० प्रद्योतनो दिनमणिः खद्योतो लोकबान्धवः ।
२६१ इनो भगो धामनिधिश्चांशुमाल्यब्जिनीपतिः ।
२६२ माठरः पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्वकाः । (Sun's aides)
२६३ सूरसूतोऽरुणोऽनूरुः काश्यपिर्गरुडाग्रजः । (Charioteer)
२६४ परिवेषस्तु परिधिः प्रकाशो द्योत आतपः । (Halo, Sunshine)
२६५ सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन् उदेति च । (Early-bedder)
२६६ अंशुमानभिनिर्मुक्ताभ्युदितौ च यथाक्रमम् ।
२६७ भानुःकरो मरीचिः स्यान्मृगतृष्णा मरीचिका । (Ray, Mirage)
२६८ कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति । (Lukewarm)
२६९ तिग्मं तीक्ष्णं खरं तद्वत्सन्तापः सञ्ज्वरः समौ । (Hot, Very hot)
२७० हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः । (Moon)
२७१ विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः ।
२७२ अब्जो जैवातृकस्सोमो ग्लौर्मृगाङ्कः कलानिधिः ।
२७३ द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः ।
२७४ कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम् । (Stain, Mark)
२७५ कला तु षोडशो भागो कलाहीने त्वनुमतिः ।
२७६ पूर्णे निशाकरे राका पौर्णमासी च पूर्णिमा । (Full Moon)

२७७ दृष्टेन्दुकला सिनीवाली नष्टेन्दुकला कुहूः ।
२७८ अमावस्या त्वमावास्या दर्शः सूर्येन्दुसङ्गमः । (New moon)
२७९ स्याद्राहुग्रस्ते ग्रहोपरक्तोपप्लवोपरागाः । (Eclipse)
२८० अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणम् । (Disappearance)
२८१ अपिधानतिरोधानपिधानाच्छादनानि च ।
२८२ चन्द्रिका कौमुदी ज्योत्स्ना विगतारोकौ निष्प्रभा । (Moonlight)
२८३ किरणोस्रमयूखांशु-गभस्ति-घृणि-रश्मयः । (Ray)
२८४ स्युः प्रभा रुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः । (Lustre)
२८५ शोभाकान्ती रोचिःशोचिरुभेक्लीबे त्वी दीधितिः ।
२८६ सुषमा परमा शोभा तमिस्रं तिमिरं तमः । (Darkness)
२८७ ध्वान्तमन्धकारोऽस्त्रियां ध्वान्ते गाढेऽन्धतमसम् ।
२८८ क्षीणेऽवतमसं तमो विष्वक्सन्तमसं तद्वत् ।
२८९ एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ ।
२९० घस्रो दिनाहनी च वा क्लीबे दिवसवासरौ । (Day)
२९१ निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा । (Night)
२९२ विभावरीतमस्विन्यौ रजनी यामिनी तमी ।
२९३ शर्वरी तमोज्योत्स्नायुक्तरात्र्यौ तमिस्राज्यौत्स्न्यौ ।
२९४ अर्धरात्रस्तु निशीथः गणरात्रं निशा बह्व्यः ।
२९५ आगामि वर्तमानाहर्युक्तायां निशि पक्षिणी । (2 days & a night)
२९६ प्रदोषो रजनीमुखं प्रत्यूषोऽहर्मुखं कल्यम् । (Dusk, Dawn)
२९७ विभातं प्रत्युषं उषो व्युष्टं प्रभातं गोसर्गः ।
२९८ पितृप्रसूः सायंसन्ध्या कुतपस्त्वाष्टमोंऽशोऽह्नः ।
२९९ स्युः प्राह्णपराह्ण मध्याह्नास्त्रिसन्ध्यं च त्रिसन्ध्यी ।
३०० अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः । (Mars)

३०१ रौहिणेयो बुधः सौम्यो बृहस्पतिः सुराचार्यः । (Mercury)
३०२ वाचस्पतिरङ्गिरसो गीर्पतिर्धिषणो गुरुः ।
३०३ जीवश्चित्रशिखण्डिजः शुक्रो दैत्यगुरुः काव्यः । (Venus)
३०४ उशना भार्गवः कविः समो सौरिशनैश्चरौ । (Saturn)
३०५ तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः । (Rahu)
३०६ नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम् । (Star)
३०७ मृगशीर्षं मृगशिरस्तच्छिरस्तारा इल्वलाः ।
३०८ पुंस्येव पुनर्वसुस्तथा पुष्ये तु सिध्यतिष्यौ ।
३०९ दाक्षायण्योऽश्विनीत्यादि तारा अश्वयुगश्विनी ।
३१० राधा विशाखा श्रविष्ठा तु धनिष्ठा प्रोष्ठपदाः ।
३११ भाद्रपदाः सप्तविंशतिरेवं स्युर्ध्रुवस्त्वन्यः । (Pole-star)
३१२ कालो दिष्टोऽनेहा समयः स्यान्निमेषाष्टादश । (Time)
३१३ काष्ठा त्रिंशत्तु ताः कला तास्तु त्रिंशत्क्षणस्ते च ।
३१४ द्वादश मुहूर्तोऽस्त्रियां त्रिंशत्ते स्यादहोरात्रः । (Day & Night)
३१५ स एव यामाश्चाष्टौ च यामप्रहरौ द्वौ समौ ।
३१६ दशपञ्चाहः पक्षः पक्षतिः प्रतिपत् तदाद्याः ।
३१७ तिथयः प्रतिपत्पञ्चदशयोर्मध्यं पर्वसन्धिः ।
३१८ पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ । (Month)
३१९ मासा द्वादश मार्गाद्यास्तौ द्वौ ऋतुस्त्वयनं षट् । (Seasons)
३२० ते चार्कस्युदग्दक्षिणगती द्वे वत्सरः स्मृतः ।
३२१ समरात्रिन्दिने काले विषुवद्विषुवं च तत् । (Equinox)
३२२ पूर्णिमायां पुष्यो यस्मिन् स पौष एवं माघाद्याः ।
३२३ मार्गशीर्षे सहा मार्ग आग्रहायणिकश्च सः । (Names of Months)
३२४ पौषे तैष-सहस्यौ द्वौ तपा माघेऽथ फाल्गुने ।

३२५ स्यात्तपस्यः फाल्गुनिकः चैत्रे तु चैत्रिको मधुः ।
३२६ वैशाखे माधवो राधो ज्येष्ठे शुक्रः स्यादाषाढे ।
३२७ शुचिरेवं श्रावणे स्यान्नभाः श्रावणिकश्च सः ।
३२८ स्युर्नभस्य-प्रोष्ठपद-भाद्र-भाद्रपदाः समाः ।
३२९ स्यादाश्विन इषोऽप्याश्वयुजोऽपि तथा कार्तिके ।
३३० बाहुलोर्जौ कार्तिकिको मासेन पैत्रवासरः । (Day of manes)
३३१ मार्गादियुग्मैः क्रमादृतवो हेमन्तादयः ।
३३२ शिशिरान्ताः षड् तुषारस्तुहिनं मिहिका हिमम् । (Winter-snow)
३३३ अवश्यायस्तु नीहारः हिमानी हिमसंहतिः । (Frost-iceberg)
३३४ सुषीमशिशिरजडतुषारशीतलशीताः । (Cold)
३३५ हिमश्च शीते समेते सत्वगामिनि स्युर्गुणे ।
३३६ वसन्ते पुष्पसमयः सुरभिर्ग्रीष्म ऊष्मकः । (Spring, Summer)
३३७ निदाघ ऊष्मोपगम उष्ण ऊष्मागमस्तपः । (Monsoon-Year)
३३८ स्त्रियामेतौ प्रावृड्भूम्नि वर्षाः शरद् हायनाब्दौ । (Day of Gods)
३३९ संवत्सरवत्सरौ शरत्समाः दैववासरे ।
३४० तत्कालस्तु तदात्वं स्यादुत्तरकाल आयतिः । (Present time)
३४१ दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः । (Good luck)
३४२ मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः । (Manvantara)
३४३ दैवे युगसहस्रे द्वे द्विपरार्धौ ब्राह्मकल्पौ । (Brahma Kalpa)
३४४ कल्पस्तु प्रलयः क्षयः संवर्तः कल्पान्तोऽपि च । (Great deluge)
३४५ अन्तोऽन्तिः जघन्यं चरमश्च पाश्चात्यपश्चिमौ । (End)
३४६ अन्त्यमपि पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्याः । (Beginning)
३४७ जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः । (Birth)
३४८ दिव्योपपादुका देवाः एवं जरायुजाण्डजाः । (Divine)

३४९ स्वेदजाश्चत्वारः गुल्माद्युद्भिदुद्भिज्जमुद्भिदम् । (Sweat-born)
३५० हेतुर्ना कारणम् बीजम् निदानं त्वादिकारणम् । (Reason)
३५१ हेतुशून्यायां तु उभे स्वैरिता यदृच्छेत्यपि । (Accident)
३५२ क्षेत्रज्ञ आत्मा पुरुषः प्रधानं प्रकृतिः स्त्रियाम् । (Purusha, Nature)
३५३ स्वरूपं स्वभावनिसर्गौ सत्त्वादिगुणास्त्रयः ।
३५४ प्राणी तु चेतनो जन्मी जन्तु-जन्युशरीरिणः । (Living being)
३५५ जन्तुषूर्ध्वस्रोतस्तिर्यङर्वागिति जातित्रयम् । (Plant, animal, man)
३५६ प्रथमौ द्वावविदो भूरितमसः प्राणज्ञास्तिरः ।
३५७ अविद्याज्ञानमहम्मतिः व्यक्तिः पृथगात्मता । (Ignorance)
३५८ बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः । (Intelligence)
३५९ प्रेक्षोपलब्धिश्चित्संवित् प्रतिपज्ज्ञप्ति-चेतनाः ।
३६० मेधा तु धारणावती धीशक्तिर्निष्क्रमेऽपि च ।
३६१ उपाधिर्ना धर्मचिन्ता चर्चा संख्या विचारणा । (Reflection)
३६२ ऊहोऽध्याहारस्तर्कः निर्णयनिश्चयौ सिद्धान्ताः । (Guess)
३६३ राद्धान्ते सन्देहसंशयद्वापरा विचिकित्सा । (Doubt)
३६४ समे भावना वासना छन्दस्त्वभिप्रायाशयौ । (Latency)
३६५ प्रमादोऽनवधानता व्यापादो द्रोहचिन्तनम् । (Inattention)
३६६ भ्रमो भ्रान्तिर्मिथ्यामतिः मिथ्यादृष्टिर्नास्तिकता । (Confusion)
३६७ धीः शिल्पशास्त्रयोर्विज्ञानं ज्ञानं सा त्वेव मोक्षे ।
३६८ मोक्षोऽपवर्गो मुक्तिः कैवल्यं च निर्वाणं श्रेयः । (Absolution)
३६९ स्यान्निःश्रेयसं चामृतं चित्तं तु चेतो हृदयम् । (Mind)
३७० स्वान्तं हृन्मानसं मनः सङ्कल्पः कर्म मानसम् । (Resolve)
३७१ अवधानं समाधानं प्रणिधानं चित्ताभोगः । (Concentration)
३७२ मनस्कारः पूर्णबोधोऽवहित्था त्वाकारगुप्तिः । (Hiding feelings)

३७३ विकारो मानसो भावोऽनुभावो भावबोधकः। (Showing feelings)
३७४ स्तम्भः स्वेदो रोमाञ्चः वेपतुस्तथा वैवर्ण्यम् ।
३७५ स्वरभङ्गो अश्रुप्रलय एते केचन बोधकाः ।
३७६ स्याज्जडीभावः स्तम्भस्तथा घर्मो निदाघः स्वेदः । (Stupefaction)
३७७ रोमाञ्चो रोमहर्षणं वेपथुः कम्पोऽश्रुचास्त्रु । (Tears)
३७८ नेत्राम्बुरोदनं चास्त्रं प्रलयो नष्टचेष्टता । (Swoon)
३७९ कामक्रोधादयो भावाः कामोऽभिलापश्च तर्षः । (Desire)
३८० इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः ।
३८१ अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम् । (Liking)
३८२ कौतूहलं कौतुकं च कुतुकं च कुतूहलम् । (Curiosity)
३८३ सोऽत्यर्थं लालसाऽभिध्या परस्य विषये स्पृहा । (Greed)
३८४ दोहदमिच्छा गर्भिण्याः कोपक्रोधामर्षरोषाः । (Anger)
३८५ प्रतिघा रुट्क्रुधौ भ्रकुटिश्च भ्रुकुटिर्भ्रूकुटिः ।
३८६ अदृष्टिः स्यादसौम्येऽक्षिण शुचौ तु चरितं शीलम् । (Virtue)
३८७ गर्वोऽभिमानोऽहङ्कारो मानश्चित्तसमुन्नतिः । (Pride)
३८८ दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः ।
३८९ अनादरः परिभवः परीभावस्तिरस्क्रिया । (Disregard)
३९० रीढावमाननावज्ञाऽवहेलनमसूक्षणम् । (Insult)
३९१ कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवौ । (Fraud)
३९२ कुसृतिर्निकृतिः शाठ्यं विप्रलम्भो विसंवादः । (Cheating)
३९३ अक्षान्तिरीर्ष्याऽसूया तु दोषारोपो गुणेष्वपि । (Fault-finding)
३९४ क्षान्तिस्तितिक्षा च क्षमा समौ संवेगसंभ्रमौ । (Agitation)
३९५ दान्तिस्तु दमथो दमः शमस्तु शमथः शान्तिः । (Restraint)
३९६ वियामो वियमो यामो यमः संयामसंयमौ ।

३९७ पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि । (Repentance)
३९८ प्रेमा ना प्रियता हार्दं प्रेमः स्नेहः स्याद्विद्वेषे । (Love)
३९९ वैरं विरोधो द्वेष्येऽक्षिगतः मन्युशोकौ तु शुक् । (Grief)
४०० व्यस्ते त्वप्रगुणाकुलौ विहस्तव्याकुलौ समौ । (Agitated)
४०१ मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसंमदाः । (Joy)
४०२ उद्धर्षे मह उद्धवः क्षण उत्सव इत्यपि ।
४०३ स्यादानन्दथुरानन्दः शर्मशातसुखानि च ।
४०४ श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् । (Auspicious)
४०५ भावुकं भविकं भव्यं कुशलं क्षेमं च शस्तम् ।
४०६ पीडा बाधा व्यथा दुःखं आमनस्यं प्रसूतिजम् । (Pain)
४०७ चिन्ता स्यात्स्मृतिराध्यानं उत्कण्ठोत्कलिकाधिः । (Anxiety)
४०८ विस्मृतमन्तर्गतं स्यादुन्मादस्तु चित्तविभ्रमः ।
४०९ मन्दाक्षं ह्रीस्त्रपा व्रीडा च लज्जा चापत्रपाऽन्यतः । (Modesty)
४१० तन्द्री प्रमीलाक्लमथः स्यात्क्लमथुरपि क्लमे । (Fatigue)
४११ जृम्भश्च जृम्भणं तथा जागरूकश्च जागरिता । (Yawn)
४१२ निद्रायां तु शयनं च संवेशः स्वापश्च स्वप्नः । (Sleep)
४१३ उपशायो विशायश्च पर्यायशयनार्थकौ । (Sleep by shift)
४१४ शब्दो रूपं गन्धरसस्पर्शाश्च विषया अमी । (Sense objects)
४१५ गोचरा इन्द्रियार्थाश्च हृषीकं विषयीन्द्रियम् । (Sense organs)
४१६ प्रत्यक्षं स्यादैन्द्रियकं अप्रत्यक्षमतीन्द्रियम् ।
४१७ शब्दे निनादनिनदध्वनिध्वानरवस्वनाः । (Sound)
४१८ स्वान निर्घोष निर्ह्राद नादनिस्वाननिस्वनाः ।
४१९ आरवारावसंरावविरावाश्चाथ मर्मरः । (Rustle)
४२० स्वनिते वस्त्रपर्णानां भूषणानां तु शिञ्जितम् । (Tinkling)

४२१ निक्काणो निक्कणः क्काणः क्कणः क्कणनमित्यपि ।
४२२ प्रक्काणादयो वीणायाः मधुरास्फुटे सूक्ष्मे तु ।
४२३ काकली कलो मन्द्रो गम्भीरस्तारः अत्युच्चैः ।
४२४ नृणामुरसिमध्यस्थो द्वाविंशति विधो ध्वनिः ।
४२५ काकुः शोकभीत्यादिजः प्रणादस्त्वनुरागजः ।
४२६ उच्चैर्घुष्टं तु घोषणा कोलाहले कलकलः । (Uproar)
४२७ तिरश्चां वाशितं रुतं स्त्री प्रतिश्रुत्प्रतिध्वनिः । (Animal cry, Echo)
४२८ वृत्तान्तो वार्ता प्रवृत्तिरुदन्तो वाचिकमन्यत् । (News)
४२९ व्याहार उक्तिर्लपितं भाषितं वचनं वचः । (Speech)
४३० उदितं जल्पितमाख्यातमभिहितम् इत्यपि ।
४३१ अपभ्रंशोऽपशब्दः स्याल्लुप्तवर्णपदं ग्रस्तम् । (Corrupt speech)
४३२ निरस्तं त्वरितोदितं विस्पष्टं प्रकटोदितम् ।
४३३ स्फुटं प्रव्यक्तमुल्बणं म्लिष्टं यत्तदविस्पष्टम् ।
४३४ सङ्कुलं क्लिष्टं च वाक्ये परस्परपराहते । (Contradictory)
४३५ आम्रेडितं द्वित्रिरुक्तमनुलापो मुहुर्भाषा ।
४३६ अपलापस्तु निह्नवः समावालापसँल्लापौ । (Evasion)
४३७ आभाषणमेवं प्रलापोऽपद्धाहते अनर्थके ।
४३८ विलापः परिदेवनं विप्रलापो विरोधोक्तिः । (Dispute)
४३९ सुप्रलापः सुवचनं सा च कल्या शुभात्मिका ।
४४० सल्लाँपो भाषणं मिथः मोघं स्याच्च निरर्थकम् । (Useless)
४४१ सूनृतं तत्प्रिये सत्ये सत्यं तथ्यमृतं सम्यक् ।
४४२ वितथेऽनृतं चाटु चटु श्लाघा प्रेमकत्थनम् । (Flattery)
४४३ अत्यर्थमधुरं सान्त्वं सङ्गतं हृदयङ्गमम् । (Affectionate)
४४४ श्राव्यं हृद्यं मनोहारि कोमलं मृदुलं मृदु ।

४४५ सुकुमारं पेलवं रुशत्यां त्वश्लीलं निष्ठुरम् । (Harsh)
४४६ कर्कशं कठिनं क्रूरं कठोरं जरठं दृढम् ।
४४७ सभाजनार्थके स्यादानन्दनं तथाप्रच्छन्नम् ।
४४८ यशः कीर्तिः समज्ञा च स्तवः स्तोत्रं स्तुतिर्नुतिः । (Fame)
४४९ अयः शुभावहो विधिः तथा प्रशस्तवाक्येषु ।
४५० मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । (Excellent)
४५१ व्याघ्रपुङ्गवर्षभसिंहशार्दूलकुञ्जराद्याः ।
४५२ नागाश्चोत्तरपदेऽतिरिक्तश्चैवं श्रेष्ठार्थकः ।
४५३ श्रेयान् श्रेष्ठः पुष्कलः सत्तमः स्यादतिशोभने ।
४५४ अभ्युपपत्तिरनुग्रहः तद्विरोधे निग्रहः । (Blessing, Curse)
४५५ शपनं शपथस्तथा शापाक्रोशो दुरेषणे ।
४५६ अभिशापो मिथ्याभिशंसनमभ्याख्यानम् । (False charge)
४५७ मिथ्याभियोगाभीषङ्गौ आक्रोशने आक्षारणा ।
४५८ साक्रोशो मैथुनं प्रति भर्त्सनमपकारगीः । (Threat)
४५९ आक्षेपश्चोद्ये चावर्णाक्षेपनिर्वादापवादाः । (Abuse)
४६० उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे ।
४६१ यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम् ।
४६२ विवादो व्यवहारः स्यात्क्रन्दनं रुदितं क्रुष्टम् । (Dispute)
४६३ आह्वयेऽऽख्याह्वे अभिधानं नामधेयं नाम च । (Naming)
४६४ हूतिराकारणाह्वानं संहूतिर्बहुभिः कृता । (Challenge)
४६५ प्रश्नोऽनुयोगः पृच्छा च प्रतिवाक्योत्तरे समे । (Question)
४६६ संवेदो वेदना न ना याच्ञा भिक्षार्थनार्दना । (Informing)
४६७ सनिश्चाध्येषणा याचना चाभिशस्तिरित्यपि ।
४६८ प्रवह्लिका प्रहेलिका किंवदन्ती जनश्रुतिः । (Riddle, Hearsay)

४६९ रूपे शुक्लशुभ्रशुचिश्वेतविशदश्वेतपाण्डराः। (White colour)
४७० अवदातः सितो गौरो धवलोऽर्जुनपाण्डरौ।
४७१ पाण्डुरः पाण्डुर्हरिणे ईषत्पाण्डुस्तु धूसरः। (Brown)
४७२ कृष्णे नीलासितश्यामकालश्यामलमेचकाः। (Black)
४७३ पीतो गौरो हरिद्राभः पालाशो हरितो हरित्। (Yellow)
४७४ लोहितो रोहितो रक्तः शोणः कोकनदच्छविः। (Red)
४७५ पाटलश्वेतरक्तौ कृष्णरक्ते धूम्रधूमलौ। (Pale red)
४७६ अव्यक्तेऽरुणः कडारः कपिलः कद्रुपिङ्गलौ। (Tawny)
४७७ श्यावः कपिशः पिङ्गपिशङ्गौ तु पीतलोहिते।
४७८ चित्रं किर्मीरकल्माष-शबलैताश्च कर्बुरे। (Vareigated)
४७९ गन्धे सुरभिर्घ्राणतर्पणः जनमनोहरे। (Smell, Fragrant)
४८० विमर्दोत्थे परिमल आमोदी सुखवासनः।
४८१ आमोदः सोऽतिनिर्हारी स्यान्निर्हारी समाकर्षी।
४८२ दुर्गन्धः पूतिगन्धिः सुगन्धिर्विस्रसामगन्धिः। (Raw smell)
४८३ रसे मधुरकटुलवणाम्लतिक्त-तुवराः। (Taste Sweet)
४८४ इन्द्रियाणि कर्मधियौ पञ्चसाद्याः पञ्चपञ्च। (Sense organs)
४८५ पादः पदांघ्रिश्चरणः स्यात्पादाग्रन्तु प्रपदम्। (Foot)
४८६ तद्ग्रन्थी घुटिके गुल्फौ पार्ष्णिस्तयोरधः जङ्घा। (Ankle, heel)
४८७ प्रसृता जानूरुपर्वाऽष्ठीवत् सक्थि क्लीबे ऊरुः। (Shank, Knee)
४८८ तत्सन्धिर्वंक्षणः गुदं पायुरपानं शमलम्। (Excreting)
४८९ शकृत्पुरीषमुच्चारावस्करौ गूथवर्चस्कम्। (Excreta)
४९० विष्ठाविशौ किट्टमले कटः ककुद्मती श्रोणिः। (Buttocks)
४९१ श्रोणिफलकं जघनं नितम्बः पश्चात्स्त्रीकट्याः।
४९२ प्रोथश्च स्त्रियां स्फिचौ उपस्थो भगं योनिर्द्वयोः। (Generative)

४९३ शिश्नो मेढ्रो मेहनशेफसी वृषणोऽण्डकोशः ।
४९४ मुष्कश्च मूत्रं प्रस्रावः शुक्रं तु तेजो रेतसी । (Seed)
४९५ बीजवीर्येन्द्रियाणि च मध्यमं चावलग्नं मध्यः । (Waist)
४९६ पिचण्डकुक्षी जठरोदरं तुन्दं स्तनौ कुचौ । (Belly, breasts)
४९७ चूचुकं कुचाग्रं क्रोडमुरो वत्सं च वक्षश्च । (Nipple, chest)
४९८ पार्श्वेऽथ स्कन्धो भुजशिरोंऽसः सन्धी तु जत्रुणी । (Collar-bone)
४९९ भुजबाहू प्रवेष्टो दोः पञ्चशाखः शयः पाणिः । (Hand)
५०० कफोणिः कूर्परः उपर्यधः प्रगण्डप्रकोष्ठौ । (Elbow)
५०१ पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलिः पुमान् । (Palm)
५०२ पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ ।
५०३ करस्य बहिः करभः करशाखाः स्युरङ्गुल्यः । (Fingers)
५०४ अंगुष्ठस्तर्जनी मध्यमाऽनामिका कनिष्ठेति । (Thumb, &c)
५०५ प्रदेशिनीऽपि तर्जन्यां पुनर्भवकररुहौ । (Nail)
५०६ नखनखरौ नखाभावे तिरश्चां शफखुरौ । (Hoof)
५०७ प्रादेशतालगोकर्णास्तर्जन्यादियुते तते ।
५०८ वितस्तिर्द्वादशाङ्गुलः रत्न्यरत्नी मानार्थके । (Span, cubit)
५०९ बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरं व्यामः ।
५१० ऊर्ध्वविस्तृतदोःपाणिनृमाने पौरुषं त्रिषु ।
५११ ग्रीवा शिरोधिः कन्धरः कम्बुग्रीवा त्रिरेखा सा । (Neck)
५१२ अवटुर्घाटा कृकाटिका मन्या च कण्ठो गलः । (Nape, throat)
५१३ वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम् । (Mouth)
५१४ अधस्ताच्चिबुकं ओष्ठाधरौ दशनवाससी । (Chin, lips)
५१५ रदनच्छदौ च गण्डौ कपोलौ तत्परा हनुः । (Cheek, jaw)
५१६ रदना दशना दन्ता रदास्तालु तु काकुदम् । (Teeth, palate)

५१७ प्रान्तावोष्ठस्य सृक्किणी सृणिका स्यन्दिनी लाला । (Lip-corner)
५१८ रसज्ञा रसना जिह्वेत्यादयश्च ज्ञानेन्द्रिये । (Tongue)
५१९ घ्राणं क्लीबे गन्धवहो घोणा नासा च नासिका । (Nose)
५२० पक्षिणां तु चञ्चुस्त्रोटिः नासामले स्यात् सिङ्घाणम् । (Beak)
५२१ लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी । (Eye)
५२२ अम्बकं दृग्दृष्टी स्त्रियौ तारकाऽक्ष्णः कनीनिका । (Pupil)
५२३ अपाङ्गौ नेत्रयोरन्तौ कटाक्षोऽपाङ्गदर्शने । (Eye-corner)
५२४ दृष्मलं दूषिका दृग्भ्यामूर्ध्वे भ्रुवौ मध्यं कूर्चम् । (Brow)
५२५ कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः । (Ear)
५२६ पिञ्जूषं कर्णयोर्मलं ललाटमलिकं गोधिः । (Forehead)
५२७ उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम् । (Head)
५२८ चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः । (Hair)
५२९ अलकाश्चूर्णकुन्तलाः ललाटे ते भ्रमरकाः । (Curl)
५३० काकपक्षः शिखण्डकः शिखा चूडा केशपाशी । (Tuft)
५३१ व्रतिनस्तु सटा जटा स्यात्कबरी केशवेशः । (Braid)
५३२ धम्मिल्लः संयताः कचाः वेणिः प्रवेणिः विशदे । (Ornamented)
५३३ शीर्षण्यशिरस्यौ कैशिकं च कैश्यं च तद्वृन्दे ।
५३४ पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे । (Luxuriant hair)
५३५ तनूरुहं रोम लोम तिर्यक्पुंसो मुखे श्मश्रु । (Hair, moustache)
५३६ त्वगसृग्धराऽसृग्लोहितास्रक्षतजं च रक्तम् । (Skin, blood)
५३७ शोणितं वुक्का रुधिरं पिशितं तरसं मांसम् । (Flesh)
५३८ पललं क्रव्यमामिषं स्याद्वल्लूरं उपतप्तम् ।
५३९ शुष्कमांसं हृद्यग्रमांसं मेदस्तु वपा वसा । (Fat)
५४० वस्नसा स्नायुः कीकसं कुल्यमस्थि स्यादस्थनि । (Muscle)

५४१ कङ्कालः शारीरिकः पृष्ठे कशेरुका पर्शुका तु । (Skeleton)
५४२ पार्श्वे मूर्ध्नि करोटिः स्त्री कपालस्तास्मिन् कर्करः । (Skull)
५४३ मस्तिष्कं गोर्दं गोदः आन्त्रं पुरीतद्गुल्मे प्लीहः । (Entrails)
५४४ तिलकं क्लोमनि तथा नाडी तु धमनिः शिरा । (Liver, nerve)
५४५ अङ्गं प्रतीकोऽवयवोऽपघनोऽथ कलेवरम् । (Limb)
५४६ गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः । (Body)
५४७ कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः ।
५४८ वामं शरीरं सव्यं स्यादपसव्यं तु दक्षिणम् ।
५४९ प्रसव्यं प्रतिकूलं स्यादपसव्यमपष्ठु च ।
५५० अनामयं स्यादारोग्यं वार्तो निरामयः कल्पः । (Health)
५५१ उल्लाघो निर्गतो गदाद्ग्लानग्लास्नू आमयावी । (Convalescent)
५५२ विकृतो व्याकृतोऽपटुः आतुरोऽभ्यमितोऽभ्यान्तः । (Sick)
५५३ स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः । (Disease)
५५४ व्याधिभेदाः प्रतिश्यायः पीनसः क्षुत्क्षुतं क्षवः । (Catarrh)
५५५ कासः क्षवथुः क्षयः शोषोऽयक्ष्मा दुर्नामार्शसी । (Cough)
५५६ भगन्दरो निबन्धानाहौ ग्रहणी प्रवाहिका । (Constipation)
५५७ प्रच्छर्दिका वमथुर्वमिः मूत्रकृच्छ्रं त्वश्मरी । (Vomit)
५५८ शोफस्तु श्वपथुः शोथः श्लीपदं पादवल्मीकम् । (Swell)
५५९ पादस्फोटौ विपादिका विस्फोटः पिटकोऽस्त्रियाम् । (Tumour)
५६० पामपामे विचर्चिका कण्डूः खर्जूश्च कण्डूया । (Itch)
५६१ कच्छवां किलासिसिध्मे कोठस्तु श्वित्रं मण्डलकम् । (Leprosy)
५६२ कुष्ठं च व्रणोऽस्त्रियां ईर्ममरुः ना नाडीव्रणः । (Wound)
५६३ भेषजौषध-भैषज्यान्यगदो जायुरित्यपि । (Medicine)
५६४ रोगहार्यगदङ्कारौ भिषग्वैद्यौ चिकित्सके । (Doctor)

५६५ भूर्भूमिरचलानन्ता रसा विश्वम्भरा स्थिरा । (Earth)
५६६ धरा धरित्री धरणी क्षोणिर्ज्या काश्यपी क्षितिः ।
५६७ सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा ।
५६८ गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही ।
५६९ विपुला गह्वरी धात्री गौरिला कुम्भिनी क्षमा ।
५७० भूतधात्री च जगती जगच्च सागराम्बरा ।
५७१ धेनुश्च लोकधारिणी महद्भिरभिमन्त्रिता ।
५७२ विष्टपं भुवनं लोको रत्नगर्भेति च स्मृता ।
५७३ रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च । (Precious stone)
५७४ गारुत्मतं मरकतं अश्मगर्भो हरिन्मणिः । (Emerald)
५७५ शोणे लोहितकः पद्मरागः स्यात्खनिराकरः । (Ruby, mine)
५७६ स्वर्णं सुवर्णं कनकं हिरण्यं हेमहाटकम् । (Gold)
५७७ तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम् ।
५७८ चामीकरं जातरूपं महारजतकाञ्चने ।
५७९ रुक्मं कार्तस्वरं जाम्बूनदमष्टपदेऽस्त्रियाम् ।
५८० अलङ्कारसुवर्णं शृङ्गी कनकं कृताकृते ।
५८१ हेमरूप्ये कोशश्च हिरण्यं कुप्यं ताभ्यामन्यत् । (Base metal)
५८२ दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतं स्याद्रीतौ । (Silver)
५८३ आरकूटः ताम्रे शुल्वं म्लेच्छमुखमुदुम्बरम् । (Brass, copper)
५८४ व्यष्टं च वरिष्ठं तीक्ष्णपिण्डेऽश्मसारः शस्त्रकम् । (Iron)
५८५ लोहोऽयः कालायसं सिंहाणमण्डूरे तन्मलम् । (Rust)
५८६ नागसीसके वप्रयोगेष्टे रङ्गवङ्गे त्रपुः । (Lead, tin)
५८७ पिच्चटं च सर्वं स्यात्तैजसं लोहे काचे क्षारा । (Glass)
५८८ मृण्मृत्तिका प्रशस्ता तु मृत्सामृत्स्ना च मृत्तिका । (Soil)

५८९ ऊष ऊषवानूषरो क्षारमृदाकरो रुमा । (Saline, salt mine)
५९० समौ मरुधन्वानौ स्थलं स्थली खिलाप्रहते । (Desert, waste)
५९१ बन्धुरमुन्नतानतमुच्चावचं नैकभेदम् । (Uneven)
५९२ शर्करा शर्करिलः शार्करश्च शर्करावति । (Gravelly)
५९३ सिकतावति चैवं वल्मीकं नाकुर्वामलूरः । (Sandy, ant-hill)
५९४ नडप्राये नड्वान्नड्वलेत्थं कुमुद्वान् वेतस्वान् । (Reedy, bamboo)
५९५ शाद्वलः शादहरिते सजम्बाले तु पङ्किलः । (Grassy, muddy)
५९६ जम्बालस्तु निषद्वरः पङ्कोऽस्त्री शादकर्दमौ । (Mud)
५९७ जलप्रायमनूपं कच्छः सर्वसस्याढ्योर्वरा । (Marshy, fertile)
५९८ द्यौश्च पृथिवी च स्यादेकयोक्त्या दिवस्पृथिव्यौ । (Sky & Earth)
५९९ द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी ।
६०० महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः । (Mountain)
६०१ अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः ।
६०२ लोकालोकश्चक्रवालस्त्रिकूटस्त्रिककुत्समौ ।
६०३ हिमवद्विन्ध्यगन्धमादनादयोऽन्ये च नगाः ।
६०४ कूटोऽस्त्रीशिखरं शृङ्गं स्नुः प्रस्थः सानुरस्त्रियाम् । (Peak)
६०५ तुङ्गे च तथा स्यादुच्चप्रांशून्नतोदग्रोच्छ्रिताः । (High)
६०६ कटकोऽस्त्री नितम्बोऽद्रेः प्रपातस्त्वतटो भृगुः । (Sides, cliff)
६०७ दन्तकास्तु बहिस्तिर्यक्प्रदेशान्निर्गता गिरेः ।
६०८ उपत्यकाऽऽद्रेरासन्ना भूमिरूर्ध्वमधित्यका । (Lowland)
६०९ पादाः प्रत्यन्तपर्वताः पाषाणप्रस्तरौ ग्रावन् । (Foothill, stone)
६१० शिलोपलाश्मानौ दृषत् टङ्कः पाषाणदारणः । (Stone-breaker)
६११ स्थूलाश्च्युता गण्डशैलाः दरी गह्वरं कन्दरः । (Cave)
६१२ गुहाऽपि निकुञ्जकुञ्जौ लतादिपिहितोदरे । (Arbour)

६१३ मनश्शिला मनोगुप्ता मनोह्वा नागजिह्विका । (Red arsenic)
६१४ गैरेयमर्थ्यं गिरिजमश्मजं च शिलाजतु । (Chalk &c)
६१५ सिन्दूराञ्जनान्येवं नैकविधानि स्यात्पारदे ।
६१६ सूतश्च चपलो रसश्च गिरिजामलमभ्रकम् । (Quicksilver talc)
६१७ अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः । (Cloud)
६१८ धाराधरो जलधरस्तडित्वान्वारिदोऽम्बुभृत् ।
६१९ घनजीमूतमुदिरजलमुग्धूमयोनयः ।
६२० कादम्बिनी मेघमाला त्रिषु मेघभवेऽभ्रियम् ।
६२१ स्तनितं गर्जितं मेघनिर्घोषे रसितादि च । (Thunder)
६२२ शम्पा-शतह्रदा-ह्रादिन्यैरावत्यः क्षणप्रभा । (Lightning)
६२३ तडित्सौदामिनी विद्युच्चञ्चला चपला अपि ।
६२४ स्फूर्जथुर्वज्रनिर्घोषो मेघज्योतिरिरंमदः ।
६२५ इन्द्रायुधं शक्रधनुस्तदेव ऋजुरोहितम् । (Rainbow)
६२६ वृष्टिर्वर्षं तद्विघातेऽवग्रहावग्रहौ समौ । (Rain, drought)
६२७ धारासम्पात आसारः पृषन्तिबिन्दुपृषताः । (Drop)
६२८ शीकरश्च ना विप्रुषः स्त्री एतेऽम्बुकणाः स्मृताः ।
६२९ वर्षोपलस्तु करका मेघच्छन्नेऽह्नि दुर्दिनम् । (Hailstone)
६३० आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् । (Water)
६३१ पयः कीलालममृतं जीवनं भुवनं वनम् ।
६३२ कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम् ।
६३३ अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम् ।
६३४ मेघपुष्पं घनरसः त्रिषु द्वे आप्यमम्मयम् ।
६३५ नदी सरित्तरङ्गिणी तटिनी ह्रादिनी धुनी । (River)
६३६ स्रोतस्वती द्वीपवती स्रवन्ती निम्नगापगा ।

६३७ कूलङ्कषो शैवलिनी रोधोवक्रा सरस्वती ।
६३८ तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम् । (Bank, sandy)
६३९ कूलं रोधस्तीरं प्रतीरं तटमन्तरे पात्रम् । (Bed)
६४० पारावारे परार्वाची जलोच्छ्वासाः परीवाहाः । (Overflow)
६४१ डिण्डीरोऽब्धिकफः फेनः कूपकास्तु विदारकाः । (Foam)
६४२ प्रसन्नोऽच्छः प्रसादश्च कलुषोऽनच्छाविलः । (Clean,, dirty)
६४३ मलीमसं तु मलिनं कच्चरं मलदूषितम् ।
६४४ पूतं पवित्रं मेध्यं च वीध्रं तु विमलोऽर्थकम् । (Pure)
६४५ निर्णिक्तं शोधितं मृष्टं निःशोध्यमनवस्करम् ।
६४६ उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः । (Cascade)
६४७ सरणे स्वतःस्रोतः प्रणाली कृत्रिमा कूल्याऽल्पा । (Channel)
६४८ भ्रमः स्याज्जलनिगमः सरित्सु त्वत्र गङ्गाद्याः । (Outlet)
६४९ गङ्गा विष्णुपदी जह्नुतनया त्रिस्रोता भीष्मसूरपि । (Ganga)
६५० कालिन्दी सूर्यतनया यमुना शमनस्वसा । (Yamuna)
६५१ रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका । (Narmada)
६५२ शतद्रुस्तु शुतुद्रिः स्याद्विपाशा तु विपाट् स्त्रियाम् । (Sutlej)
६५३ शोणो हिरण्यवाहः सरस्वती कावेर्याद्याश्च । (Sone)
६५४ सम्भेदः सिन्धुसङ्गमः जलाशयो जलाधारः । (Confluence)
६५५ तत्रागाधे ह्रदः खेयं परिखा पुंस्येवाधारः । (Moat)
६५६ अन्धुः प्रहिः कूपः वोदपानं वापी तु दीर्घिका । (Well)
६५७ आहावो निपानं तथा उपकूपजलाशये । (Trough)
६५८ कूपस्य नेमिस्त्रिका वीनाहस्तु मुखबन्धनम् । (Pulley)
६५९ उद्घाटनं घटीयन्त्रं सलिकोद्वाहनं प्रहेः ।
६६० शुल्वं वराटकं स्त्री रज्जुस्त्रिषु वटी गुणः । (Rope)

६६१ आलावालमावालमावापः वेशन्तोऽल्पसरः । (Basin puddle)
६६२ पल्वलमपि पुष्करिण्यां तु खातं चाखातं च ।
६६३ पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः । (Lake)
६६४ कुमुदिनी पद्मिनीमुखाः हंसादयः सरोद्विजाः । (Lotus-pond)
६६५ हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसाः । (Swan)
६६६ राजहंसास्तु ते सिताः चञ्चुचरणैर्लोहितैः । (Flamingo)
६६७ मलिनैर्मल्लिकाक्षास्ते धार्तराष्ट्राः सितेतरैः । (Goose)
६६८ हंसी वरटा कोकश्चक्रश्चक्रवाको रथाङ्गः । (Ruddy goose)
६६९ शशारिराटिराडिश्च बलाका विसकण्ठिका । (Crane)
६७० बकः कह्वः पुष्कराह्वस्तु सारसः स्त्री लक्ष्मणा ।
६७१ कादम्बः कलहंसः स्यादुत्क्रोशकुररौ समौ । (Duck osprey)
६७२ जलनीली शैवलः शैवालं स्यादुत्पले सिते । (Moss)
६७३ कह्लारं कुमुदं कैरवं सौगन्धिकं नीले तु । (White lily)
६७४ कुवलयमिन्दीवरं रक्तोत्पलं कोकनदम् । (Blue lily, red lotus)
६७५ वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् । (Lotus)
६७६ सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ।
६७७ पङ्केरुहं तामरसं सारसं सरसीरुहम् ।
६७८ बिसप्रसूनराजीव-पुष्कराम्भोरुहाणि च ।
६७९ पुण्डरीकं सिताम्भोजं हल्लकं रक्तसन्ध्यकम् । (White lotus)
६८० उत्पलकन्दः शालूकं पद्मस्य तु करहाटः । (Stalk)
६८१ मृणालबिसनालास्तु नालं किञ्जल्कः केसरः । (Filament)
६७२ संवर्तिका नवदलं बीजकोशो वराटकः । (Seed cup)
६८३ कोरकः क्षारको जालकं कलिका स्त्री मुकुलः । (Bud)
६८४ कुड्मलश्च फुल्लोत्फुल्लौ त्वेते विकसिते तथा । (Blown)

६८५ प्रफुल्ल संफुल्ल व्याकोश विकचास्फुटेत्यपि ।
६८६ स्त्रियां भूम्नि सुमनसः पुष्पं प्रसूनं कुसुमम् । (Flower)
६८७ स्याच्च सुमं क्लीवे परागः स तु सुमनोरजः । (Pollen)
६८८ मकरन्दः पुष्परसो मधु क्षौद्रं च माक्षिकम् । (Honey)
६८९ मधूच्छिष्टं तु सिक्थकं स्याद्गुच्छकस्तु स्तम्बकः । (Bees' wax)
६९० लतातरुवीरुद्गुल्मजार्तवाः कुसुमभेदाः ।
६९१ वसन्ते मालती जातिर्माघे च कुन्दं मन्दारम् ।
६९२ स्याच्चम्पा हेमकुसुमं तत्तु तरुसमुद्भवम् ।
६९३ ओण्ड्रपुष्पं जपापुष्पं वज्रपुष्पं तिलस्य यत् ।
६९४ लतायां वल्ली व्रततिः स्यात् अतिमुक्तस्तु पौण्ड्रकः । (Creeper)
६९५ प्रियंगुः फलिनी फली कारम्भा प्रियकश्च सा ।
६९६ वासन्ती माधवी तद्वत् द्राक्षा स्वाद्वी च मृद्विका । (Grape)
६९७ गोस्तन्यपि मधुरसा ताम्बूलवल्ली ताम्बूली । (Betel leaf)
६९८ नागवल्ली च वृक्षरुहा जीवन्तिकादयोऽपि ।
६९९ लताप्रतानिनी वीरुद्गुल्मिन्युलप इत्यपि । (Horizontal)
७०० विसृत्वरो विसृमरः प्रसारी च विसारिणी ।
७०१ भोज्यफलदा कूष्माण्डकोऽलाबू कर्कटीत्यादि ।
७०२ कन्दे सूरणोऽर्शोघ्नः मूले पलाण्डुः सुकन्दकः । (Yam, onion)
७०३ लतार्कदुद्रुमौ तत्र हरिते मूलकमन्यत् ।
७०४ लशुनं गुञ्जनारिष्ट-महाकन्दरसोनकाः । (Garlic)
७०५ शाकाख्यं स्यात्पत्रपुष्पाद्यमून्यपि भोज्यदाः ।
७०६ अस्त्री शाकं हरितकं शिग्रुकडम्बौ नाडिका ।
७०७ शाकक्षेत्रादिके शाकशाकटं शाकशाकिनम् । (Kitchen garden)
७०८ वेल्लजं मरीचं कोलकं कृष्णं धर्मपत्तनम् । (Condiments)

७०९ जीरको जरणाऽजाजी स्यादार्द्रकं शृङ्गवेरम् ।
७१० कुस्तुम्बुरु च धन्याकं शुण्ठी विश्वं महौषधम् ।
७११ हरिद्रा वरवर्णिनी वेसवार उपस्करः ।
७१२ नडस्तु धमनः स्यान्नडादयश्च तृणभेदाः । (Reed)
७१३ काशौ ना भूम्नि बल्वजाः स्यादिक्षू रसालस्तथा । (Sugar-cane)
७१४ वीरणं वीरतरे मूलेऽस्योशीरं लामज्जकम् । (Khus-khus)
७१५ नलदमभयं सेव्यममृणालं जलाशयम् ।
७१६ दूर्वा शतपर्विका सहस्रवीर्याऽनन्तारुहा । (Panic grass)
७१७ कुरुविन्दो मेघनामा मुस्ता मुस्तको गवेधुः ।
७१८ गमुत्प्रमुखास्त्री कुशं कुथो दर्भश्च पवित्रम् ।
७१९ शष्पो बालतृणं घासो यवसं तृणमर्जुनम् । (Tender grass)
७२० कत्तृणं भूस्तृणाद्यपि तृणराजाह्वयस्तालः । (Palm-tree)
७२१ घोण्टा पूगा क्रमुको गुवाकः खपुरः फलेऽस्य । (areca)
७२२ उद्वेगः खर्जूरः केतकी ताली खर्जूरी समे । (Date-palm)
७२३ नालिकेरस्तु लाङ्गली तृण्या नड्येति संहतौ ।
७२४ वंशे त्वक्सार कर्मार त्वचिसार तृणध्वजाः । (Bamboo)
७२५ शतपर्वा यवफलो वेणुमस्कर तेजनाः ।
७२६ वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः ।
७२७ ग्रन्थिर्ना पर्वपरुषी वेतसे रथाभ्रपुष्पम् । (Knot)
७२८ विदुर-शीतवानीरवञ्जुलाः विदुलोऽम्बुजः ।
७२९ ह्रस्वशाखशिफः क्षुपः एरण्डो व्याघ्रपुच्छके । (Shrub, castor)
७३० उरुबूकरुचकचित्रकचञ्चुपञ्चाङ्गुलाः ।
७३१ गन्धर्वहस्तकमण्डवर्धमानव्यडम्बकाः ।
७३२ अल्पाशमी शमीरः करवीरे हयमारकः ।

७३३ उन्मत्तः कितवो धूर्तो धत्तूरः कनकाह्वयः ।
७३४ मातुलो मदनश्च जम्बीरे स्यात्तु मरुबकः । (Citron)
७३५ ओषध्यः फलपाकान्ताः कदली वारणबुसा । (Plantain)
७३६ रम्भा मोचांशुमत्फला काष्ठीला इत्यपि स्मृता ।
७३७ वृक्षो महीरुहः शाखी विटपी पादपस्तरुः । (Tree)
७३८ अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः ।
७३९ वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः ।
७४० वन्ध्योऽफलोऽवकेशी च स्युरवन्ध्यः फलेग्रहिः ।
७४१ फलवान् फलिनः फली वृक्षादीनां फलं सस्यम् ।
७४२ आमे फले शलाटुः शुष्के वानं विनाशोन्मुखे । (Raw, dried)
७४३ पक्कं परिणते च स्याच्चैवं अभिनवोद्भिदि । (Ripe, sprout)
७४४ अंकुरः मूलं बुध्नोऽङ्घ्रिः स्थाणुर्वा ना ध्रुवः शङ्कुः । (Root)
७४५ प्रकाण्डः स्कन्धः वल्कलं वल्कमेतेऽस्त्रियां त्वक्स्त्री । (Stem, bark)
७४६ सारो मज्जा वल्लरिर्मञ्जरिः कोटरं निष्कुटः । (Shoot, sap)
७४७ विस्तारो विटपः वृन्तं प्रसवबन्धनं समे । (Main branch)
७४८ शाखालते स्कन्धशाखा-शाले जटा शाखाशिफा ।
७४९ अवरोहः सैव स्याच्च मूलादग्रं गता लता ।
७५० शाखाग्रं शिखरं वा ना नगाद्यारोहः उच्छ्रायः । (Top, height)
७५१ उत्सेधश्चोच्छ्रयश्च सः पत्रं पलाशं छदनम् । (Leaf)
७५२ दलं पर्णं छदः पुमान् पल्लवोऽस्त्री किसलयम् । (Tender leaf)
७५३ काष्ठं दारु इन्धनं इध्ममेधः समित्स्त्रियाम् । (Timber)
७५४ अश्वत्थे बोधिद्रुमश्चलदलः कुञ्जराशनः । (Peepul)
७५५ पिप्पलश्च स्युरन्याश्च कपित्थोदुम्बरादयः ।
७५६ पलाशे किंशुकः पर्णो वातपोथः प्लक्षे जटिः ।

७५७ पर्कटी च न्यग्रोधो बहुपाद्वटः बिल्वे शाण्डिल्यः । (Fig-tree)
७५८ शैलूषमालूर-श्रीफलाः स्यात्कर्कन्धूः बदरी । (Jujube)
७५९ कोलिश्च तूदस्तु यूपः साले सर्जकः स्याद्भूर्जे ।
७६० चर्मि-मृदुत्वचौ खदिरो दन्तधावनोऽभया । (Birch)
७६१ साऽव्यथा पथ्या कायस्था पूतनाऽमृता श्रेयसी । (Myrobalam)
७६२ हरीतकी हेमवती चेतकी शिवाऽऽमलकी ।
७६३ अमृता च वयस्था च निम्बे पिचुमन्दोऽरिष्टः । (Neem)
७६४ हिंगुनिर्यासमालको देवदारौ च सप्तभिद् ।
७६५ केसरे बकुलो वञ्जुलोऽशोके कुटजः शक्रः ।
७६६ समौ करकदाडिमौ तमालतापिच्छौ तथा । (Pomegranate)
७६७ कालस्कन्धे आम्रश्चूतो रसालस्त्वतिसौरभे । (Mango)
७६८ सहकारः पनसः कण्टकिफलः चिञ्चाम्लिका । (Jack)
७६९ तिन्तिडी चुक्रं जम्बीरे जम्बजम्भीरजम्भलाः । (Lime)
७७० अकृष्टकृष्टकृष्टाकृष्टोद्भूताः वृक्षलताद्याः ।
७७१ कृष्टजाः प्रायो भोज्यदा अन्ये भेषजप्रभवाः ।
७७२ कृष्टे सीत्यहल्ये द्विहल्यं द्विसीत्यं शम्बाकृतम् । (Ploughed)
७७३ द्विगुणाकृतं द्वितीयाकृतं चैवं त्रिहल्याद्यः ।
७७४ कृषकः फालःसीरः फालं लाङ्गलं गोदारणम् । (Ploughshare)
७७५ शम्या युगकीलकः स्यादीषायां लाङ्गलदण्डः ।
७७६ पशुयोक्त्रदाम्र्मेधिः सीता लाङ्गलपद्धतिः । (Yoke, furrow)
७७७ प्राजनं तोदनं तोत्रं नध्री वर्ध्री च वरत्रा । (Goad)
७७८ कशापि खनित्रमवदारणे स्याल्लोष्टे लेष्टुः । (Spade, clay)
७७९ कोटिशो लोष्टभेदनः वप्रोऽस्त्री क्षेत्रे केदारः । (embankment)
७८० कैदारकं कैदार्यं क्षेत्रगणे तु कैदारिकम् ।

७८१ परिक्षिप्तं निवृतं वेष्टितं वलयितं रुद्धम् । (Enclosed)
७८२ संवीतमावृतं च समौ वृत्तव्यावृत्तौ तथा ।
७८३ देशो नद्यम्बुवृष्ट्यम्बुसंपन्नव्रीहिपालितः । (River-fed)
७८४ स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ।
७८५ बीजाकृतं तूप्तकृष्टे व्रीहिभवनं व्रैहेयम् । (Ploughed rice field)
७८६ शाल्युद्भवोचितं शालेयमेवं षष्टिक्यमादि ।
७८७ यव्यं यवक्यं तिल्यं तैलीनं द्विरूपता तथा । (Barley)
७८८ माषोमाणुभङ्गाः शेषे मौद्गीन-कौद्रवीणादि । (Pulses)
७८९ अतसी तूमा क्षुमा भङ्गा मातुलानी स्यादणुः ।
७९० व्रीहिभेदः व्रीहिः धान्यं स्तम्बकरिः स्तम्बो गुच्छः । (Grain)
७९१ काण्डो नाडी नालं स्याद्बुसं पलालः कटंकरः । (Straw)
७९२ तुषो धान्यत्वक् पूतं बहुलीकृतं धान्यं ऋद्धम् । (Husk)
७९३ आवसितं शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे शमी शिम्बा । (Sharp-tipped)
७९४ शितशूकयवौ समौ तोक्मस्तु तत्र हरिते । (Green barley)
७९५ कोरदूषस्तु कोद्रवः स्यान्मसुरो मंगल्यकः । (Lentil)
७९६ सर्षपेऽर्जुने सिद्धार्थः माषादयः शमीधान्ये । (Mustard)
७९७ शूकधान्ये यवादयः तृणधान्यानि नीवाराः ।
७९८ स्यान्नीवाकस्तु प्रयामः स्तम्बघ्नस्तु स्तम्बघनः । (Famine)
७९९ उत्कारश्च निकारश्च द्वौ धान्योत्क्षेपणार्थकौ । (Winnowing)
८०० अयोग्रं मुसलोऽस्त्री स्यादुदूखलमुलूखलम् । (Pestle, mortar)
८०१ प्रस्फोटनं शूर्पमस्त्री चालनी तितउः पुमान् । (winnow-basket)
८०२ बद्धे संदानितं मूतमुदितं संदितं सितम् । (tied up)
८०३ स्यूतप्रसेवौ कण्डोलपिटौ कटकिलिञ्जकौ । (Sack, mat)
८०४ द्रुराजमृगेन्द्रावासो विपिनं काननं वनम् । (Forest)

८०५ गहनमटव्यरण्यम् अरण्यानी महारण्यम् । (Vast forest)
८०६ वनसमूहे तु वन्या स्यात्तथा तद्भवेऽपि च ।
८०७ सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः । (Lion)
८०८ कण्ठीरवो मृगरिपुर्मृगदृष्टिर्मृगाशनः ।
८०९ पुण्डरीकः चित्रकायः पञ्चनखो मृगद्विपः ।
८१० शार्दूलद्वीपिनौ व्याघ्रे गण्डके खड्गखड्गिनौ । (Tiger)
८११ अष्टपादः शरभः सिंहघाती उष्ट्रार्थेऽपि च ।
८१२ दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः । (Elephant)
८१३ मतंगजो गजो नागः कुञ्जरो वारणः करी ।
८१४ इभः स्तम्बेरमः पद्मी करिणी धेनुका वशा । (Female)
८१५ कलभः करिशावकः यूथनाथस्तु यूथपः । (Calf)
८१६ मदोत्कटो मदकलः प्रभिन्नो गर्जितो मत्तः । (in-rut)
८१७ समावुद्वान्त-निर्मदौ मदो दानं स्याद्गलाटे । (out of rut, ichor)
८१८ अवग्रहः कुम्भौ पिण्डौ ईपिका अक्षिकूटकम् । (Temple, eye-ball)
८१९ अपाङ्गदेशो निर्याणं कर्णमूलं तु चूलिका ।
८२० आसनं स्कन्धदेशः स्यात्पद्मकं बिन्दुजालकम् । (Coloured patch)
८२१ शृङ्खले अन्दुको निगडः आलानं बन्धस्तम्भः । (Chain)
८२२ वारी तु गजबन्धनी दूष्या कक्ष्या वरत्रा च । (Leather girth)
८२३ तोत्रं वेणुकं अंकुशः सृणिःस्त्री प्रवेणी कुथः । (spear, housing)
८२४ उष्ट्रे क्रमेलको मयो महाङ्गश्च मरुद्विपः । (Camel)
८२५ शृङ्खलकश्च कण्टकभुक् करभस्तु तच्छिशुः ।
८२६ तरक्षुस्तु मृगादनः कोक ईहामृगो वृकः । (Hyena, wolf)
८२७ वराहः सूकरो घृष्टिः कोलः पोत्री किरिःकिटिः । (Boar)
८२८ दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि ।

८२९ ग्राम्यो विट्चरः भल्लूके ऋक्षाच्छ-भल्लभल्लुकाः । (Pig, bear)
८३० श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम् । (Porcupine)
८३१ स्त्रियां शिवा भूरिमायगोमायुमृगधूर्तकाः । (Jackal)
८३२ शृगालवंचुकक्रोष्टुफेरुफेरवजम्बुकाः ।
८३३ लुलायो महिषो वाहद्विषत्कासरसैरिभाः । (Bison)
८३४ तच्छृङ्गे गवलं घोटके वीत्यश्ववाजिवाहाः । (Horse)
८३५ तुरग-तुरंग-तुरंगमार्व-गन्धर्वहयाः ।
८३६ सैन्धवसप्ती च सिते तस्मिन्कर्कः स्थौरी पृष्ठ्यः ।
८३७ वीतेऽसारं ययुर्मेधीयो वृन्दमश्वीयमाश्वम् ।
८३८ वाम्यश्वा वडवा वाडवं गणे स्याद् हेषा च ह्रेषा । Mare, neighing
८३९ शरीरेऽश्वानां मध्यं कश्यं निगालो गलोद्देशः । (Neck)
८४० घोणा तु प्रोथमस्त्रियां कविका तु खलिनी स्त्री । (Bridle)
८४१ पुच्छस्तेषां लूमलाङ्गूले वालहस्तो वालधिः । (Tail)
८४२ आस्कन्दितादि पञ्चधाराऽऽश्वीनं त्वेकाहयातम् । (Pace)
८४३ चक्रीवन्तस्तु वालेया रासभा गर्दभाः खराः । (Donkey)
८४४ वातप्रमीर्वातमृगो वातायुः कुरङ्गमृगौ । (Deer)
८४५ कदली कन्दली चीनश्चमूरु-प्रियकावपि ।
८४६ समूरुश्चेति हरिणा अमी अजिनयोनयः ।
८४७ कृष्णसाररुरुन्यंकुरंकु-शम्बररौहिषाः ।
८४८ गोकर्णपृषतैणर्श्यरोहिताश्चमरोमृगाः ।
८४९ गन्धर्वरामसृमराश्च चर्माद्यैणेयमैण्यम् ।
८५० दक्षिणारुलुब्धयोगाद्दक्षिणेर्मा कुरङ्गकः । (Wounded by hunter)
८५१ गवयो वन्यः उक्षा भद्रो बलीवर्दश्चर्षभः । (Wild ox, bull)
८५२ अनड्वान् वृषभो वृषः सौरभेयो गौः तद्वृन्दे ।

८५३ औक्षकं गव्या गोत्रा एवं च वात्सक-धैनुके । (Herd)
८५४ शकृत्करिर्वत्सः सद्योजातस्तर्णकः दम्यस्तु । (New-born, young)
८५५ वत्सतरः जातोक्षो महोक्षो वृद्धो जरद्गवः ।
८५६ षण्डो गोपतिरिट्चरः स्यान्नस्योतस्तु नस्तितः । (Freed bull)
८५७ स्कन्धो वहः सास्ना गलकम्बलः युगपार्श्वगे । (Shoulder dewlap)
८५८ प्रष्ठवाड्युग्यो हालिकसैरिकौ एवं प्रासंग्यः । (Plough-ox)
८५९ शाकटश्च वोढरि स्युर्धुर्य-धौरेय-धुरीणाः। (Pack-bull)
८६० माहेयी सौरभेयी गौरुस्रा माता शृंगिणी । (Cow)
८६१ अर्जुन्यघ्न्या च रोहिणी नैचिकी सा गोषूत्तमा । (Best)
८६२ ऊधस्तु क्लीबमापीनं पीनोघ्नी पीवरस्तनी । (Udder)
८६३ सुव्रता सुखसन्दोह्या सुकरा चाचण्डी च सा ।
८६४ एकाब्दा एकहायनी त्र्यब्दा द्विहायनीत्यादि । (Year-old &c)
८६५ वशा वन्ध्या वेहच्च काल्या तु प्रजनोपसर्या । (Barren)
८६६ अवतोका स्रवद्गर्भा प्रष्ठौही बालगर्भिणी ।
८६७ बष्कयिणी चिरप्रसूता धेनुर्नवसूतिका । (Newly calved)
८६८ बहुसूतिः परेष्टुका समांसमीनाऽब्दप्रसूः ।
८६९ अजा छागी शुभच्छाग-बस्तछगलका अजे । (Goat)
८७० मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके । (Ram)
८७१ वर्करस्तरुणः पशुः वृन्दे आजकौरभ्रकम् । (Young)
८७२ कौलेयकः सारमेयः कुक्कुरो मृगदंशकः । (Dog)
८७३ शुनको भषकः श्वा विश्वकद्रुर्मृगयाक्षमः । (Hunting dog)
८७४ सरमा कुक्कुरी शुनी अलर्कस्तु स योगितः । (Mad dog)
८७५ ओतुर्बिडालो मार्जारो वृषदंशक आखुभुक् । (Cat)
८७६ कपि-प्लवङ्ग-प्लवग-शाखामृग-वलीमुखाः । (Monkey)

८७७ मर्कटो वानरः कीशो वनौकाः शशोऽपि वन्यः ।
८७८ नागास्तु काद्रवेयास्तेषामीश्वरः शेषोऽनन्तः । (Snake)
८७९ अजगरे शयुवाहसौ स्याद्राजिलो डुण्डुभः । (Boa, poisonless)
८८० अलगर्दो जलव्यालः सर्पराजस्तु वासुकिः । (Cobra)
८८१ सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः ।
८८२ आशीविषो विषधरश्चक्री व्यालः सरीसृपः ।
८८३ कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी ।
८८४ दर्वीकरो दीर्घपृष्ठो दन्तशूको बिलेशयः ।
८८५ अगः पन्नगो भोगी जिह्मगः पवनाशनः ।
८८६ लेलिहानो द्विरसनो गोकर्णः कञ्चुकी तथा ।
८८७ कुम्भीनसः फणधरो हरिर्भोगधरश्च सः ।
८८८ अहेस्तनुः भोगः दंष्ट्रिकाऽऽशीः फणायान्तु स्फटा । (Teeth, hood)
८८९ समौ कञ्चुक-निर्मोकौ निर्मुक्तो मुक्तकञ्चुकः । (Slough)
८९० विषभेदाः कालकूटादि नव विषाद्याहेयम् ।
८९१ वृश्चिकः शूककीटोऽलिद्रुणौ लूना तन्तुवायः । (Scorpion)
८९२ ऊर्णनाभमर्कटकौ क्रिमिस्तु कर्णजलौकाः । (Worm)
८९३ अधोगन्ता तु खनको वृकः पुंध्वज उन्दुरः । (Mouse)
८९४ उन्दरुर्मूषक आखुश्च गिरिका बालमूषिका ।
८९५ भेके मण्डूकवर्षाभूः शालूर-प्लवदर्दुराः । (Frog)
८९६ शिली गण्डूपदी भेकी वर्षाभ्वी कमठी डुलिः ।
८९७ सरटः कृकलासः स्यान्मुसली गृहगोधिका । (Chameleon)
८९८ खगे विहंगविहगाविहंगमविहायसः । (Bird)
८९९ शकुन्तिपक्षिशकुनि-शकुन्तशकुनद्विजाः ।
९०० पतत्रिपत्रिपतगपतत्-पत्ररथाण्डजाः ।

९०१ नगौको वाजिविकिर-विविष्किर-पतत्रयः ।
९०२ नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसङ्गमाः ।
९०३ स्युः पत्रं पतत्रं तनूरुहम् गरुत्पक्षच्छदाः । (Wing)
९०४ तन्मूलं पक्षतिः प्रडीनोड्डीनसंडीना गतौ । (Flight modes)
९०५ आतापिचिल्लौ पत्री श्येनः दाक्षाय्यगृध्रौ समौ । (Hawk)
९०६ लोहपृष्ठः कंकः क्रुङ् क्रौंचः चाषः किकीदिविः । (Heron)
९०७ कर्करेटुः करेटुस्तित्तिरः सारङ्गश्चातकः । (Partridge)
९०८ व्याघ्राटो भरद्वाजः दार्वाघाटः शतपत्रकः । (Skylark)
९०९ वनप्रियः परभृतः कोकिलः पिक इत्यपि । (Kokila)
९१० द्रोणकाकस्तु काकोलो दात्यूहः कालकण्ठकः । (Raven)
९११ कीरः शुकः उलूकस्तु वायसाराति-पेचकौ । (Parrot)
९१२ दिवान्धः कौशिको घूको दिवाभीतो निशाटनः । (Owl)
९१३ काके तु करटारिष्ट-बलिपुष्ट-सकृत्प्रजाः । (Crow)
९१४ ध्वाङ्क्षात्मघोषौ परभृद्बलिभुग्वायसोऽपि च ।
९१५ चिरञ्जीवी चैकदृष्टिर्मौकुलिः कलविङ्कस्तु । (Sparrow)
९१६ चटकः चटका स्त्री स्यात्पुमपत्ये चाटकैरः ।
९१७ पारावतः कलरवः कपोतः कापोतं वृन्दम् । (Pigeon)
९१८ जतुकाऽजिनपत्रः स्यात्कुक्कुभो वन्यकुक्कुटः । (Bat, wild fowl)
९१९ कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः । (Cock)
९२० मयूरो बर्हिणी बर्ही नीलकण्ठो भुजङ्गभुक् । (Peacock)
९२१ शिखावलः शिखी केकी मेघनादानुलास्यपि ।
९२२ केका वाणी मयूरस्य समौ चन्द्रकमेचकौ । (Eye on tail)
९२३ फल्गुसाराः खगाः फलधान्यादो नीडवासिनः ।
९२४ नीडं कुलायः गिरिछिद्रादिकेतनाः वाजिवर्याः । (Nest)

९२५ भृंगारी झीरुका चीरी च झिल्लिका मक्षिकायाम् । (Cricket)
९२६ वन्या दंशोऽल्पा तु दंशी वर्वणा मक्षिका नीला । (Blue fly)
९२७ खद्योतो ज्योतिरिंगणः पतङ्गशलभौ समौ । (Firefly)
९२८ गन्धोली वरटा द्वयोः सरघा मधुमक्षिका । (Wasp, bee)
९२९ मधुव्रतो मधुकरो मधुलिण्मधुपालिनः ।
९३० द्विरेफपुष्पलिड्-भृंगषट्पदभ्रमरालयः ।
९३१ स्त्रीपुंसौ मिथुनं द्वन्द्वं युग्मं च युगलं युगम् । (Couple)
९३२ समूहो निवहव्यूहसन्दोहविसरव्रजाः । (Collection)
९३३ स्तोमौघनिकरव्रातवारसंघात-सञ्चयाः ।
९३४ गणे समुदायसमुदयौ समवायश्च यः ।
९३५ सजन्तुभिः सङ्घसार्धवर्गाः सजातीयैः कुलम् ।
९३६ निकायसमाजौ सहधर्मिणाम् पशूनाम् समजः ।
९३७ पुञ्जराशी तूत्करः कूटः निकरम्बं कदम्बकम् । (Heap)
९३८ वृन्दे संहतिः स्त्री कापोत शौकमायूरादीनि ।
९३९ गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते । (Tame)
९४० गृहं गेहोदवसितम् वेश्म सद्म निकेतनम् । (House)
९४१ निशान्तपस्त्यसदनं भवनागारमन्दिरम् ।
९४२ गृहाः पुंसि च भूम्न्येव निकाय्य-निलयालयाः ।
९४३ वासः कुटी शाला सभायां चाश्वशाला मन्दिरा । (Stable)
९४४ संजवनं चतुश्शालं चन्द्रशाला शिरोगृहम् । (Quadrangle)
९४५ पर्णशालोटजश्चैत्यमायतनं शिल्पशाला । (Hermitage)
९४६ आवेशनं मठश्छात्रादिवासः प्रपा गञ्जा च । (Factory)
९४७ पानीयमद्यशालिकयोः मण्टपोऽस्त्री जनाश्रयः । (Pavilion)
९४८ हर्म्यादि धनिनां वासः प्रासादो देवभूभुजाम् । (Mansion)

९४९ सौधोऽस्त्री राजसदनं उपकार्योपकारिका । (Palace)

९५० विच्छन्दकादि भेदा हि भवन्तीश्वरसद्मनाम् ।

९५१ विशङ्कटं पृथु बृहद्विशालं पृथुलं महत् । (Extensive)

९५२ वड्रोरु विपिलं चास्मिन्स्याद्विष्वक्समे तु निघः । (Cube)

९५३ अरालं वृजिनं जिह्ममूर्मिमत् कुञ्चितं नतम् । (Crooked)

९५४ आविद्धं कुटिलं वेल्लितं वक्रं भुग्नं रुग्णेऽपि । (Bent)

९५५ ऋजावजिह्म-प्रगुणौ वर्तुलं निस्तलं वृत्तम् । (Straight)

९५६ गर्भागारं वासगृहमरिष्टं सूतिकागृहम् । (Maternity room)

९५७ राजस्त्र्यागारमन्तःपुरावरोधावरोधनम् । (Harem)

९५८ शुद्धान्तःप्रघाणप्रघणालिन्दा च प्रकोष्ठके । (Portico)

९५९ तोरणोऽस्त्री बहिर्द्वारं पूर्द्वारि कूटं गोपुरम् । (Gateway)

९६० कुट्टिमोऽस्त्री निबद्धा भूश्चत्वराजिरे त्वङ्गणम् । (Pavement)

९६१ गृहावग्रहणी देहली शिलानासे दार्वधोच्चैः । (Threshold)

९६२ स्त्री द्वार्द्वारं प्रतीहारः प्रच्छन्नं अन्तर्द्वारं यत् । (Door)

९६३ कपाटमररं विष्कम्भोऽर्गलं स्यान्निरर्गलम् । (Panel, bolt)

९६४ अबाधकं वितर्दिस्तु वेदिका पटलं छदिः । (Balcony)

९६५ पटलप्रान्ते वलीकनीध्रे स्यात्कपोतालयम् । (Roof edge)

९६६ विटङ्कं गोपानसी तु वलभी भित्तिस्त्री कुड्यम् । (Sloping roof)

९६७ आरोहणं स्यात्सोपानं निश्रेणिस्त्वधिरोहिणी । (Stairs, ladder)

९६८ गृहारामे निष्कुटः उपवनं कृत्रिमं वनम् । (Garden)

९६९ राज्ञस्तूद्यानमाक्रीडः तदेव प्रमदवनम् ।

९७० यदन्तःपुरोचितं तथा चामात्यगणिकयोः ।

९७१ सैव वृक्षवाटिका स्यान्मालिके तु मालाकारः । (Gardener)

९७२ वीथ्यालिरावलिः पंक्तिः श्रेणिर्लेखास्तु राजयः । (Row)

९७३ सुन्दरं रुचिरं चारु सुषमं साधु शोभनम् । (Lovely)
९७४ कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जुमञ्जुलम् ।
९७५ तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात् ।
९७६ वास्तु वेश्मभूः ग्रामः संवसथोऽन्तमुपशल्यम् । (House-site)
९७७ ग्रामाजीवे देवाजीवो देवलः कारुस्तु शिल्पी । (Priest)
९७८ शिल्पं कर्मकलादिकं सजातिसंहतिः श्रेणिः । (Guild)
९७९ कुलकः स्यात्कुलश्रेष्ठी रङ्गाजीवश्चित्रकरः । (Painter)
९८० ईषिका तूलिका समे प्रतियातनाऽपि चित्रे । (Brush, picture)
९८१ पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता । (Doll)
९८२ तन्तुवायः कुविन्दस्तन्तुः सूत्रं सूत्रवेष्टनम् । (Weaver, yarn)
९८३ त्रसरो वेमा वायदण्डो वाणिर्व्यूतिः वसने । (Shuttle)
९८४ वस्त्रमाच्छादनं वासश्चैलमंशुकम् तद्योनौ । (Cloth)
९८५ त्वक्फलक्रिमिरोमाणि वाल्कं क्षौमे दुकूलम् ।
९८६ फाले कार्पासबादरे कौशेयं कृमिकोशजम् ।
९८७ पत्रोर्णं धौतकौशेयं बहुमूल्यं महाधनम् । (Bleached silk)
९८८ राङ्कवं मृगरोमजं समौ रल्लक-कम्बलौ । (Blanket)
९८९ नीशारः प्रावरणं स्याद् हिमानिलनिवारणे । (Shawl)
९९० अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरम् । (New cloth)
९९१ पटच्चरं जीर्णवस्त्रं समौ नक्तककर्पटौ । (Old cloth)
९९२ सुचेलकः पटोऽस्त्री स्याद्वराशिः स्थूलशाटकः । (Coarse cloth)
९९३ दशाः स्त्री भूम्नि वस्त्रस्य दैर्घ्यं आयाम आरोहः । (Border)
९९४ परिणाहो विशालता निवीतं प्रावृतं त्रिषु । (Width, covering)
९९५ तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम् ।
९९६ प्रावारोत्तरासङ्गौ बृहतिकोत्तरीयं च तत् । (Upper cloth)

९९७ संव्यानं चोलः कूर्पासको अर्धोरुकं चण्डातकम् । (Blouse, skirt)
९९८ अन्तरीयोपसंव्यान-परिधानान्यधोंशुके । (Under-wear)
९९९ प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा । (Screen)
१००० अस्त्री वितानमुल्लोचो दूष्याद्यं वस्त्रवेश्मनि । (Canopy, tent)
१००१ तुन्नवायस्तु सौचिकः कृपाणी कर्तरी समे । (Tailor, scissors)
१००२ सेवनं सीवनं स्यूतिः ऊतं स्यूतमुतं चेति । (Sewing)
१००३ छिन्नं छातं लूनं कृत्तं दातं दितं छितं वृक्णम् । (Cutting)
१००४ पादूकृच्चर्मकारः आरा तु चर्मप्रभेदिका । (Cobbler, awl)
१००५ विद्धे वेधितच्छिद्रितौ आस्फोटनी वेधनिका । (Pierced, gimlet)
१००६ पदायतानुपदीना पादुका पादूरुपानत् । (Foot-wear)
१००७ भस्त्रा चर्मप्रसेविका नाडिन्धमः स्वर्णकारः । (Leather bag)
१००८ कलादो रुक्मकारकः नाराची स्यादेषणिका । (Silver-smith)
१००९ व्योकारो लोहकारकः मूषा तैजसावर्तनी । (Ironsmith)
१०१० सूर्मी स्थूणायःप्रतिमा प्रतिमार्चा प्रतिनिधिः । (Image)
१०११ प्रतिच्छाया प्रतिकृतिः प्रतिबिम्बं प्रतिमानम् ।
१०१२ उपमानमुपमा समस्तुल्यः सदृक्सदृक्षः । (Equal)
१०१३ सदृशः समानः साधारणश्च तूत्तरपदे ।
१०१४ निभसङ्काशनीकाशप्रतीकाशोपमादयः ।
१०१५ शौल्बिकस्ताम्रकुट्टकः स्यात्कुम्भकारः कुलालः । (Copper-smith)
१०१६ सर्वमावपनं भाण्डं पात्रामत्रं च भाजनम् । (Vessel)
१०१७ स्याच्छाङ्खिकः काम्बविकः वेणुध्माःस्युर्वैणविकाः । Conch-maker
१०१८ वीणावादा वैणिका मार्दङ्गिकाः पाणिघास्तद्वत् । (Lutist)
१०१९ तक्षा तु वर्धकिस्त्वष्टा रथकारस्तु काष्ठतट् । (Carpenter)
१०२० ग्रामाधीनो ग्रामतक्षः कौटतक्षोऽनधीनकः ।

१०२१ व्रश्चनः पत्रपरशुः क्रकचोऽस्त्री करपत्रम् । (Saw)
१०२२ तष्टत्वष्टौ तनूकृते दारिते भिन्नभेदितौ । (Planed, sawn)
१०२३ पलगण्डस्तु लेपकः पुस्तं लेप्यादिकर्मणि । (Plasterer)
१०२४ क्षुरी मुण्डी दिवाकीर्तिनापितान्तावसायिनः । (Barber)
१०२५ निर्णेजको रजकः मायाकारः प्रतिहारकः । (Washerman)
१०२६ माया शाम्बरी खलपूर्बहुकरः वैवधिके । (Sweeper, pedlar)
१०२७ वार्तावहो भारको भारवाहः स्याद्भारयष्टिः ।
१०२८ विहङ्गकस्तदालम्बि शिक्यं पिटकः पेटकः । (Swing, basket)
१०२९ पेटा च मञ्जूषा भृतकः कर्मकरो भृतिभुक् । (Hired servant)
१०३० वैतनिकः वेतनं भृतिर्भृत्या भरण्यं विधा । (Wages)
१०३१ भरणं भर्म कर्मण्या मूल्यं पणश्च निर्वेशः ।
१०३२ मनुष्या मानुषा मर्त्या मनुजा मानवा नराः । (Man)
१०३३ नास्त्रीक्लीबं लिङ्गत्रिकं वचनानि त्र्येकबहु ।
१०३४ पुमांसः पञ्चजनाः पूरुषाः पुरुषाश्च नरः । (Male)
१०३५ प्रकृतिविशेषास्तत्र महेच्छश्च महाशयः । (Magnanimous)
१०३६ हृदयालुः सुहृदयः स्निग्धश्च वत्सलश्च सः । (Affectionate)
१०३७ स्याद्दयालुः कारुणिकः समौ कृपालुसूरतौ । (Kind)
१०३८ श्रद्धायुक्ते श्रद्धालुः शक्तो यः स प्रियंवदः ।
१०३९ शरारुर्घातुको हिंस्रो नृशंसः पापश्च क्रूरः । (Cruel)
१०४० स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे । (Very liberal)
१०४१ सुकलो दातृभोक्तरि स्यादधिकर्द्धिः समृद्धः । (Giver)
१०४२ वरदस्तु समर्धकः अतिरिक्तः समधिकः । (Excelled)
१०४३ सत्कृत्यालंकृतां कन्यां यो ददाति स कूकुदः ।
१०४४ कदर्ये कृपणः क्षुद्रः किंपचानो मितंपचः । (Miser)

१०४५ वराङ्गरूपोपेतो यः सिंहसंहननोऽपि सः ।
१०४६ निर्वार्यः कार्यकर्ता यः सम्पन्नः सत्त्वसम्पदा । (Irresistible)
१०४७ महोत्साहो महोद्यमः क्रियावान् कर्मसूद्यतः ।
१०४८ स कार्मः कर्मशीलो यः कर्मशूरस्तु कर्मठः ।
१०४९ कर्मक्षमोऽलङ्कर्मीणः कर्मकारस्तु तत्क्रियः ।
१०५० मन्दस्तुन्दपरिमृजालस्य-शीतोऽनुष्णोऽलसे ।
१०५१ दीर्घसूत्रश्चिरक्रियः जाल्मस्तु सोऽसमीक्ष्यकृत् । (Dilatory)
१०५२ दक्षे चतुरः पेशलः पटुः सूत्थान उष्णकः ।
१०५३ शिश्विदानोऽकृष्णकर्मा तूष्णींशीलस्तु तूष्णीकः । (Pious)
१०५४ तत्परे प्रसितासक्ताविष्टार्थोद्युक्त उत्सुकः । (Single minded)
१०५५ एकतानोऽनन्यवृत्तिरेकाग्रैकायनावपि ।
१०५६ अप्येकसर्ग एकाग्र्योऽप्येकायतनश्चापि सः ।
१०५७ विविधः स्याद्बहुविधः नानारूपः पृथग्विधः । (Various)
१०५८ स्थास्नुः स्थिरतरः स्थेयानेकरूपतया तु यः । (Fixed)
१०५९ संकसुकोऽस्थिरश्चपलश्चिकुरश्च चरिष्णुः । (Unsteady)
१०६० चलनं कम्पनं कम्प्रं चलं लोलं चलाचलम् ।
१०६१ चञ्चलं तरलं धुवनं पारिप्लव-परिप्लवे ।
१०६२ वेल्लवं प्रेङ्खणं चैवं त्रसमिङ्गं चराचरम् ।
१०६३ दक्षिणे सरलोदारौ निकृतस्त्वनृजः शठः । (Straight-forward)
१०६४ धूर्तो वञ्चकः पिशुनो दुर्जनः खलः सूचके । (Cheat)
१०६५ कर्णेजपः पुरोभागी दोषैकदृक् क्षन्ता क्षमी । (Informer)
१०६६ सहिष्णुः सहनस्तितिक्षुः स्यात्तु क्रोधने । (Angry)
१०६७ अमर्षणः कोपी तथा चण्डकोऽत्यन्तकोपनः ।
१०६८ कामुको कमितानुकः कम्रः कामयिताऽभीकः । (Libidinous)

१०६९ कमनः कामनोऽभिकः प्रगल्भः प्रतिभान्विते । (Bold)
१०७० धृष्टे धृष्णग्वियातोऽधृष्टे शालिनोऽहङ्कारवान् । (Impudent)
१०७१ अहंयुः समुद्धतोऽविनीतमत्तशौण्डोत्कटाः । (Proud)
१०७२ क्षीबे चात्तगर्वोऽभिभूतः वश्यो विनयग्राही । (Humiliated)
१०७३ विधेयप्रणय-निभृतविनीतश्च प्रश्रितः ।
१०७४ लज्जाशीलेऽपत्रपिष्णुरभ्यागारिके उपाधिः । Devoted to family
१०७५ कुटुम्बव्यापृतः स्यादाशंसुरेवमाशंसितरि । (Hopeful)
१०७६ हर्षमाणो विकुर्वाणः प्रमना हृष्टमानसः । (Joyous)
१०७७ मत्तस्तृप्तः प्रीतः प्रमुदितः प्रह्लन्न इत्यपि ।
१०७८ सन्तापित धूपित दून धूपायिताः सन्तप्ते । (Afflicted)
१०७९ विह्वले व्यसनार्तोपरक्तान्तर्मना दुर्मनाः ।
१०८० उत्कोन्मनाश्च विमनाः संशयात्मा सांशयिकः ।
१०८१ जैवातृकस्त्वायुष्मान् सिद्धे निर्वृत्तनिष्पन्नौ । (Accomplished)
१०८२ बुभुक्षितः स्यात्क्षुधितो जिघत्सुरशनायिता । (Hungry)
१०८३ भक्षको घस्मरोऽद्मरः आमिषाशी तु शौष्कलः । (Meat-eater)
१०८४ बुभुक्षाशनाया क्षुत्पिपासोदन्या च तृट्तर्षः । (Hunger, thirst)
१०८५ ग्रासः कवलः जग्धिर्भोजनं जेमनमाहारः । (Morsel, food)
१०८६ न्याद निघसो लेहश्च फेला भुक्तसमुज्झिते । (Food leavings)
१०८७ विजिगीषा विवर्जिते स्यादाद्यून औदरिकः । (Glutton)
१०८८ स्वोदरपूरके उभावात्मम्भरिः कुक्षिम्भरिः ।
१०८९ परान्नः परपिण्डादः सर्वान्नीनः सर्वान्नभुक् ।
१०९० सग्धिः स्त्री सहभोजनं सपीतिः स्त्री तुल्यपानम् ।
१०९१ भुक्तेऽन्नजग्धग्लस्त-ग्रस्ताशितप्सात-खादितम् ।
१०९२ चर्वितलीढ प्रत्यवसिताभ्यवहृत भक्षिते ।

१०९३ कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् । (Enough)
१०९४ प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु । (Plenty)
१०९५ पुरुहूः पुरु भूयिष्ठं स्फारं भूयश्च भूरि च ।
१०९६ स्त्रियां मात्रा त्रुटिः पुंसि लवलेश-कणाणवः । (Very little)
१०९७ अत्यल्पेऽल्पिष्ठं अल्पीयः कणीयोऽणीय इत्यपि ।
१०९८ गृहयालुर्ग्रहीतारि स्याद्गृध्नो गर्धनस्तुल्यः । (Greedy)
१०९९ लुब्धोऽभिलाषुकस्तृष्णकः द्वौ लोलुपलोलुभौ ।
११०० स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः । (Woman)
११०१ विशेषास्तु प्रतीपदर्शिनी महिला वनिता ।
११०२ वामा वामलोचनाङ्गना कान्ता कामिनी भीरुः ।
११०३ प्रमदा च मानिनी ललना रामा नितम्बिनी । (Lovely-hipped)
११०४ रमणी सुन्दरी कोपना स्याच्च सैव भामिनी ।
११०५ वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ।
११०६ पोटा स्त्रीपुंसलक्षणा वृद्धा पलिक्नी गोष्वपि । Bearded woman
११०७ कात्यायन्यर्धवृद्धा या काषायवसनाऽधवा ।
११०८ मध्यमा युवतिस्तरुणी दृष्टरजाः स्यादविः । (Young)
११०९ स्त्रीधर्मिण्यात्रेयी मलिनी रजस्वलार्तुमती ।
१११० पुष्पवत्युदक्या च निष्कला सा विगतार्तवा । (Elderly)
११११ स्याद्रजः पुष्पमार्तवं कन्या तु कुमारी गौरी ।
१११२ नग्निकानागतार्तवा नग्निका स्त्री स्यात्कोटवी । (Virgin)
१११३ नग्नोऽवासा दिगम्बरे स्यादालिः सखी वयस्या ।
१११४ प्रेष्या त्वन्तःपुरस्त्री सैरन्ध्री या परवेश्मस्था । Woman servant
१११५ इच्छावती कामुका स्याद्वृषस्यन्ती तु कामुकी । (Desirous)
१११६ पुंश्चली कान्तार्थिनी साङ्केतिका साभिसारिका । (Wanton)

१११७ स्वैरिणी धर्षिणी बन्धक्यसती कुलटेत्वरी ।
१११८ पांसुला च दूती सञ्चारिका कुट्टनी शम्भली ।
१११९ वारस्त्री गणिका वेश्या च रूपाजीवा जनैर्या । (Harlot)
११२० सत्कृता सा वारमुख्या वेशो वेश्याजनाश्रयः । (Abode)
११२१ प्राज्ञी प्रज्ञा प्राज्ञा धीमती दैवज्ञा विप्रश्निका । (Astrologer)
११२२ स्वयंवरा पतिंवरा वर्या स्यात्पाणिपीडने । (Marriage)
११२३ विवाहोपयमपरिणयोद्वाहोपयामाश्च ।
११२४ व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम् । (Coition)
११२५ दम्पती जम्पती जायापती भार्यापती समे ।
११२६ कुलस्त्री कुटुम्बिनी कुलपालिका च पुरन्ध्री । (House-wife)
११२७ सती सुचरित्रा साध्वी पतिव्रता स्याच्चिरिण्टी । Mature woman
११२८ सुवासिनी कृतसापत्निकाऽध्यूढा चाधिविन्ना । (With co-wife)
११२९ पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषुः पतिः । (Re-married)
११३० द्विजश्चेत्सोऽग्रेदिधिषुः विश्वस्ता विधवाधवा । (Widow)
११३१ अशिश्वी शिशुना विना अवीरा निष्पतिसुता ।
११३२ आपन्नसत्वा गुर्विण्यन्तर्वत्नी गर्भिणीत्यपि । (Expectant)
११३३ श्रद्धालुर्दोहदवती स्याज्जरायुर्गर्भाशयः । (Womb)
११३४ गर्भो भ्रूणः कललोल्बं सूतिमासो वैजननः । (Embryo)
११३५ स्याज्जातापत्या प्रसूता प्रजाता च प्रसूतिका । (Delivered)
११३६ सौभागिनेयः सुभगासुतः पारस्त्रैणेयस्तु ।
११३७ परस्त्रियाः बन्धुले बान्धकिनेयोऽसतीसुतः ।
११३८ कौलटेरकौलटेयौ कौलटिनेयो भिक्षुक्याः ।
११३९ कौलटेयोऽपि सा सती चेत् कन्याजाते कानीनः । (Virgin's son)
११४० अमृते जारजः कुण्डो मृते भर्तरि गोलकः ।

११४१ तृतीया प्रकृतिः षण्ढः क्लीबः पण्डो नपुंसके । (Eunuch)
११४२ मातुःपिता मातामहः पितामहः पितुःपिता । (Grandfather)
११४३ तत्पिता प्रपितामहः तातस्तु जनकः पिता । (Father)
११४४ निषेकादिकृद्गुरुः जननी जनयित्री प्रसूः । (Mother)
११४५ तद्भ्राता स्यान्मातुलः मातुलानी तु मातुली ।
११४६ पितृव्यस्तु पितुर्भ्राता पैतृष्वसेयस्यात्सुतः ।
११४७ पैतृष्वस्रीयश्च पितृष्वसुः स्याद् भगिनी स्वसा । (Sister)
११४८ भागिनेयस्तत्पुत्रः स्वस्रीयः भ्रातुस्तु भ्रात्रीयः ।
११४९ पूर्वजस्त्वग्रियोऽग्रजः कनिष्ठयवीयानुजाः । (Brother)
११५० जघन्यजावरजौ च समानोदर्यसोदर्यौ ।
११५१ सगर्भ्यसहजौ समौ ज्येष्ठेऽनूढे परिवेत्ता ।
११५२ अनुजो दारपरिग्रहात् परिवित्तिस्तज्ज्यायान् । (Elder)
११५३ पत्नी पाणिगृहीता द्वितीया च सहधर्मिणी । (Wife)
११५४ भार्या जाया पुंभूम्नि दाराश्च भर्ता धवः प्रियः । (Husband)
११५५ पतिः (जारस्तूपपतिः) तयोर्मिथः प्रसूः श्वश्रूः । (Paramour)
११५६ श्वशुरः पिता, पत्नीभ्राता श्यालः, देवृदेवरौ । (-in-laws)
११५७ तौ पत्युः तत्स्वसा ननान्दा स्युर्भ्रातृवर्गभार्याः ।
११५८ यातरोऽन्योन्यं, भ्रातृजाया प्रजावती स्वजाते । (Brother's wife)
११५९ औरस्योरस्यौ आत्मजस्तनयः सूनुश्च सुतः । (Son)
११६० पुत्रोऽपि स्त्रियां सर्वेऽमी दुहितरि तोकापत्ये । (Daughter)
११६१ जामाता पतिर्दुहितुः समाः स्नुषाजनी-वध्वः । Daughter-in-law
११६२ सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः । (Kinsmen)
११६३ ज्ञातेयं वृन्दे बन्धुता वरस्य स्निग्धस्तु जन्यः ।
११६४ एकोक्त्या स्त्रीपुंसोः पितरौ श्वशुरौ च भ्रातरौ ।

११६५ शिशुत्वं शैशवं बाल्यं तारुण्यं यौवनं जरा । (Old age)
११६६ स्थाविरं वृद्धत्वं विस्रसाऽवस्था वृन्दे वार्धकम् ।
११६७ पाकोऽर्भको डिम्भः शिशुः पृथुकः, पोतशावकौ । (Infant)
११६८ स्यातां पतत्पश्वोः डिम्भोत्तानशयस्तनंधयः ।
११६९ स्तनपाश्च बालो माणवकः किशोरः पौगण्डः । (Boy)
११७० युवावयस्थस्तरुणः समे जीर्णो जरज्ज्यायान् । (Old man)
११७१ जीनः स्थविरः प्रवया दशमी वर्षीयान्वृद्धः ।
११७२ अमांसो दुर्बलश्छातो बलवान् मांसलोऽसलः । (Feeble)
११७३ ऊर्जस्वलःस्यादूर्जस्वी समौ उरस्व्युरसिलौ । (Broad chested)
११७४ पीनः पीव्नः स्थूलः पीवरः स्यात्पृश्निरल्पतनुः । (Stout, lean)
११७५ क्षुल्लकेऽल्पस्तोकः सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु ।
११७६ खर्वह्रस्वौ न्यङ्नीचौ वामने कुब्जे गडुलः । (Dwarf )
११७७ रुजा भुग्ने न्युब्जोऽवाग्रेऽवनतानतम् । (Bent)
११७८ केशी कैशिकः परिवापितस्तु मुण्डमुण्डितौ । (Long haired)
११७९ वलिनः वलिभः एडो बधिरः स्याच्च वलिरः । (Wrinkled)
११८० केकरेऽन्धोऽदृङ् चुल्लचिल्लपिल्लाः क्लिन्नाक्षेऽक्ष्णि च ।
११८१ अवनीटोऽवरीटोऽवभ्रटः खुरणः खुरणाः । (Flat nosed)
११८२ खरणाः स्यात्खरणसो विग्रस्तु गतनासिकः । (No-nose)
११८३ मूकोऽवाक् एडमूकः श्रोतुं वक्तुं अशिक्षितः । (Dumb)
११८४ तुन्दिलस्तुन्दिभस्तुन्दी बृहत्कुक्षिः पिचण्डिलः । (Pot-bellied)
११८५ वृद्धनाभश्च कुकरः कुणिः श्रोणः पंगुः खोडः । (Arm-lame)
११८६ ऊर्ध्वजानुके ऊर्ध्वज्ञुः प्रज्ञुः प्रगतजानुकः । (Long-shanked)
११८७ संहते संज्ञुः जडुलः कालकः पिप्लुस्तिलकः । (Knock-kneed)
११८८ तिलकालकः विकलाङ्गोऽपोगण्डः स्यात्पामने । (Moled)

११८९ कच्छुरोऽपि श्लेष्मलः श्लेष्मणः कफी स्याद्वातकी । (Scabby)
११९० वातरोगी अर्शोरोगयुतोऽर्शसः सातिसारे । (Rheumatic)
११९१ अतिसारकी किलासी तु सिध्मलश्च दद्रुणः । (Dysentery)
११९२ मूर्छालो मूर्तमूर्छितौ स्यादुन्मत्तस्तून्मदिष्णुः । (Swooned)
११९३ उन्मादवच्च सः प्रतिकर्मणि तु प्रसाधनम् । (Toilet)
११९४ प्रतिकर्मांगसंस्कारः स्यान्मार्ष्टिर्मार्जना मृजा । (Cleansing)
११९५ आप्लावः स्नानमाप्लवः स्यान्मृतस्नानेऽपस्नानम् । (bath)
११९६ उद्वर्तनमुत्सादनं चर्चा चार्चिक्यं स्थासकः । Reviving scent
११९७ गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम् । (Sandal)
११९८ प्रबोधनमनुबोधो मण्डनस्त्वलङ्करिष्णुः ।
११९९ समुद्गकः सम्पुटकः पिष्टातः पटवासनः । (Casket)
१२०० दर्पणे मुकुरादर्शौ प्रसाधनी कङ्कतिका । (Mirror, comb)
१२०१ शयनं मञ्च-पर्यङ्क-पल्यङ्काः खट्वया च समाः । (Cot)
१२०२ शय्यायां शयनीयवत् उपधानं तूपबर्हः । (Bed, pillow)
१२०३ पीठमासनं प्रतिग्राहः पतद्ग्राहः प्रदीपे । (Spittoon)
१२०४ दीपो गेंदुकः कन्दुकः व्यजनं तालवृन्दकम् । (Ball, fan)
१२०५ संमार्जनी शोधनी क्षिप्तेऽत्र सङ्करोऽवकरः । (Broom)
१२०६ रजसि रेणुः पांसुर्ना स्त्री धूलिः चूर्णे च क्षोदः । (Dust)
१२०७ जनिप्रकृतिवार्ताभिर्भिन्नधर्मवर्णाश्रमाः ।
१२०८ विप्रक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमिति स्मृतम् ।
१२०९ वटुर्गेही यतिन्यासी स्युस्तथाऽऽश्रमधर्मिणः ।
१२१० अवर्णः पञ्चमः स्यादत्याश्रमी परमहंसः ।
१२११ सन्ततिर्गोत्र-जनन-कुलान्यभिजनान्वयौ । (Family, race)
१२१२ वंशोऽन्ववायः सन्तानो बीज्यस्तु कुलसम्भवः ।

१२१३ महाकुलकुलीनार्यसभ्यसज्जनसाधवः । (Noble)
१२१४ अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः । (Leader)
१२१५ स्वामी पतिरीश्वर ईशिता धनी त्विभ्य आढ्यः । (Opulent)
१२१६ लक्ष्मीवान्लक्ष्मणः श्रीलश्च श्रीमान् शुभंयुश्च सः ।
१२१७ निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः । (Poor)
१२१८ द्विजोऽत्यग्रजन्मा ब्रह्म भूदेव-विप्र-वाडवाः । (Brahmin)
१२१९ विद्वान्विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः । (Learned)
१२२० धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः । (Wise)
१२२१ धीमान्सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः ।
१२२२ प्रवीणनिपुणाभिज्ञ विज्ञ निष्णात शिक्षिताः ।
१२२३ वैज्ञानिकः कृतमुखः कुशलश्चासौ दीर्घदृक् ।
१२२४ अज्ञे मूढ-यथाजातमूर्ख-वैधेय-बालिशाः । (Fool)
१२२५ अनूचानः प्रवचने साङ्गे सोऽधीती छान्दसः । Vedic scholar
१२२६ श्रोत्रियः यागादिभिर्वृतो विप्रः स षट्कर्मा ।
१२२७ सांवत्सरो ज्यौतिषिको दैवज्ञ गणकावपि । (Astrologer)
१२२८ स्युर्मौहूर्तिकमौहूर्त-ज्ञानिकार्तान्तिका अपि ।
१२२९ तान्त्रिको ज्ञातसिद्धान्तः नष्टाग्निः स्याच्च वीरहा ।
१२३० मन्त्रव्याख्याकृदाचार्यः उपाध्यायस्त्वध्यापकः । (Teacher)
१२३१ पुंयोगे स्त्र्याचार्यानी स्वत आचार्या चोपाध्याया ।
१२३२ उपाध्यायान्युपाध्यायी ज्ञाता तु विदुरो विदः । (wise)
१२३३ बुद्धं बुधितं मनितं प्रतिपन्नमवसितम् । (Known)
१२३४ दक्षिणीयो दक्षिणार्ह-दाक्षिण्यौ पूज्यः प्रतीक्ष्यः ।
१२३५ प्रतीते प्रथितख्यात-वित्तविज्ञातविश्रुताः । (Famous)
१२३६ गुणैः प्रतीते तु कृतलक्षणाहतलक्षणौ ।

१२३७ वदो वदावदो वक्ता वागीशो वाक्पतिः समे । (Orator)
१२३८ वाचोयुक्तिः पटुर्वाग्मी वावदूकोऽतिवक्तरि ।
१२३९ स्याज्जल्पाकस्तु वाचालः वाचाटो बहुगर्ह्यवाक् । (Scurrilous)
१२४० दुर्मुखे स्यान्मुखरः कद्वदः कुचरः कुवदः ।
१२४१ लोहलोऽस्फुटवाक्समौ नान्दीवादी नान्दीकरः । (Prologue)
१२४२ छात्राऽन्तेवासिनौ शिष्ये शैक्षाः प्राथमकल्पिकाः । (Student)
१२४३ संस्कारपूर्वं ग्रहणं स्यादुपाकरणं श्रुतेः ।
१२४४ उपज्ञा ज्ञानमाद्यम् स्याज्ज्ञात्वारम्भ उपक्रमः । (Invention)
१२४५ दान्तो वर्णी ब्रह्मचारी सतीर्थ्यास्त्वेकगुरवः ।
१२४६ एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः । (Class-mates)
१२४७ जपः स्वाध्यायोऽस्वाध्यायो निराकृतिः गुरोस्तु यः ।
१२४८ लब्धानुज्ञः समावृत्तः पवित्रः प्रयतः पूतः । (Graduate, holy)
१२४९ स्याद्ब्रह्मवर्चसन्तु वृत्ताध्ययनादिसमृद्धिः ।
१२५० मीमांसको जैमिनेये वेदान्ती ब्रह्मवादिनि ।
१२५१ वैशेषिके स्यादौलूक्यः सौगतः शून्यवादिनि । (Buddhist)
१२५२ नैयायिकस्त्वक्षपादः स्याद्वादिक आर्हकः । (Jain)
१२५३ चार्वाको लौकायतिकः सत्कार्ये साङ्ख्यकापिलौ । (Materialist)
१२५४ पाखण्डाः सर्वलिङ्गिनः त्ववकीर्णी क्षतव्रतः । (Heretic)
१२५५ पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः ।
१२५६ एते पञ्चमहायज्ञा ब्रह्मयज्ञादि नामकाः ।
१३५७ सांनाय्यं हविरग्नौ हुतं अतिथिर्ना गृहागते । (Guest)
१२५८ आवेशिकश्चागन्तुः प्राघूर्णिकश्च प्राघूर्णकः ।
१२५९ आतिथेये पाद्यमर्घ्यमुपस्पर्शस्त्वाचमनम् ।
१२६० पादग्रहणमभिवादनम् तत्कृत्तु वन्दारुः । (Salutation)

१२६१ पूजा नमस्याऽपचितिः सपर्यार्चार्हणाः समाः । (Worship)
१२६२ वरिवस्या तु शुश्रूषा परिचर्याऽप्युपासना । (Service)
१२६३ यमनियमौ तु नित्यं शारीरागन्तुसाधने ।
१२६४ नियमो व्रतं पुण्यकर्मोपवस्यं तूपवासः । (Fast)
१२६५ क्रतुः खातादीष्टापूर्ते सुकृती पुण्यवान् धन्यः ।
१२६६ श्राद्धं पितृकर्म शाश्वतः पितृदानं निवापः । (Libation)
१२६७ समानौ रसवत्यां तु पाकस्थान-महानसे । (Kitchen)
१२६८ अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका । (Fireplace)
१२६९ हसन्यङ्गारधानिकाङ्गारशकटी हसन्ती । (Portable oven)
१२७० ऋजीषं पिष्टपचनं भ्राष्ट्रोऽम्बरीषं कन्दुस्तु । (Frying pan)
१२७१ स्वेदनी पिठरः स्थाल्युखा शरावो वर्धमानः । (Platter)
१२७२ कुण्डः कलशो घटः कुटनिपौ स्यादलिञ्जरे । (Vessel)
१२७३ मणिकः कर्कर्यालुर्गलन्तिका पानार्थं कंसः ।
१२७४ दर्विः कम्बिः खजिका च स्यात्तर्दूर्दारुहस्तकः । (Spoon)
१२७५ कृत्तेः स्नेहपात्रं तु कुतूः सैवाल्पा ना कुतुपः । (Leathern pot)
१२७६ पौरोगवस्तत्राध्यक्षः आपक्वं पौलिरभ्यूपः । (Half-baked)
१२७७ पूपोऽपूपः पिष्टकः आपूपिकस्तु कान्दविकः । (Cake, baker)
१२७८ आरनालकसौवीर-कुल्माषाभिषुतानि च । (Gruel)
१२७९ अवन्तिसोमधान्याम्ल-कुञ्जलानि च काञ्जिके ।
१२८० मासराचामनिस्रावा मण्डे भक्तसमुद्भवे ।
१२८१ यवागूरुष्णिका श्राणा विलेपी तरला च सा ।
१२८२ भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री स दीदिविः । (Rice)
१२८३ स्याद्भिस्सटा दग्धिका च दग्धे प्रुष्टप्लुष्टोषितः । (Burnt food)
१२८४ सूपकारा वल्लवा आरालिकान्धसिकाश्च ते । (Cook)

१२८५ सूदा औदानिका गुणाः स्याद्लवणे च समुद्रे । (Sea-salt)
१२८६ वशिराक्षीवे शीतशिवमणिमन्थे सैन्धवः ।
१२८७ रौमकवसुकविडानि कृतके सौवर्चलम् । (Rock-salt)
१२८८ मत्स्याण्डिका खण्डविकारः सिता तस्मिन् शर्करा । Sugar-candy
१२८९ थेमनं निष्ठानं तुल्यं उभे भावितवासिते । (Condiment)
१२९० दुग्धं क्षीरं पयः पीयूषमभिनवे तत्पाके । (Milk, fresh, boiled)
१२९१ स्याच्छृतं क्षीरविकारे कूर्चिका मृष्टो रसाला ।
१२९२ पयोभवे द्रप्सं दधि घनान्यत्तक्रं उदश्वित् । (Curd)
१२९३ दण्डाहतं कालशेपमरिष्टमपि गोरसः ।
१२९४ मस्तु मण्डं दधिभवं सर्वरसाग्रेऽस्त्री मण्डम् । (Sour cream)
१२९५ वैशाखमन्थमन्थानमन्थानो मन्थदण्डके । (Churning rod)
१२९६ कुठरो दण्डनिष्कम्भो मन्थनी गर्गरी समे । (Ch. post)
१२९७ गवां सर्वं गव्यं गोविड्गोमयं शुष्कं करीषः । (Cowdung)
१२९८ यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः । (Sacrifice)
१२९९ आस्थानी त्वास्थानं सदः वेदिः परिष्कृता भूमिः । (Assembly)
१३०० समे स्थण्डिलचत्वरे कुम्बा सुगहना वृतिः । Sacred enclosure
१३०१ दक्षिणगार्हपत्याहवनीया अग्नयस्त्रेता ।
१३०२ प्रणीतः संस्कृतोऽनलो धुवित्रं ऐणव्यजनम् । (Deer-skin fan)
१३०३ लाजाः पुंभूम्न्यक्षताः भृष्टयवे तु चिपिटकः । Flattened rice
१३०४ धाना च पृथुकः तथा सदध्याज्यं पृषदाज्यम् ।
१३०५ चरुर्ना हव्यं आमिक्षा कव्यं तु पैत्रमन्नं स्यात् ।
१३०६ घृतमाज्यं हविः सर्पिर्नवनीतं नवोद्धृतम् । (Ghee, butter)
१३०७ तत्तु हैयङ्गवीनं यद्ध्योगोदोहोद्भवं घृतम् ।
१३०८ प्रत्यग्रोऽभिनवो नव्यो नवीनो नूत्ननूतनौ । (New)

१३०९ पुराणे प्रतन प्रत्न पुरातन चिरन्तनाः । (Old)
१३१० यज्ञोपयुक्तपात्राणि स्रुवादिकं स्रुचःस्त्रियः । (Sacrif. vessel)
१३११ तर्म यूपाग्रं चषाळः कटकः यस्त्वभिमन्त्र्य ।
१३१२ क्रतौ हतः पशुः स्यादपाकृतः परम्पराकम् । Sacrif. slaughter
१३१३ शमनं प्रोक्षणं वधः स्याद्यज्ञशिष्टममृतम् ।
१३१४ भोजनशेषो विघसः सौहित्यं तर्पणं तृप्तिः ।
१३१५ व्रतीनामासनं वृषी अजिनं चर्म कृत्तिः स्त्री । (Deer skin)
१३१६ यष्टा यजमानो व्रती स सोमवति दीक्षितः । (Sacrificer)
१३१७ विधिनेष्टवान् तु यज्वा गीष्पतीष्ट्या स स्थपतिः ।
१३१८ इज्याशीलो यायजूकः सत्री गृहपतिः समौ ।
१३१९ सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः ।
१३२० समज्या परिषद्गोष्ठी सभा समिति संसदः । (Assembly)
१३२१ सदस्या विधिदर्शिनः सभासदः सभास्ताराः ।
१३२२ सभ्याः सामाजिकाः सुत्वाऽऽग्नीध्राद्या याजकर्त्विजः ।
१३२३ स्युर्धनैर्वार्याः यज्ञे दीक्षान्तो यज्ञियावभृथः । (Sacrif. bath)
१३२४ त्यागो विहापितं दानमुत्सर्जनविसर्जने । (Gift)
१३२५ विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ।
१३२६ प्रादेशनं निर्वपणमपवर्जनमंहतिः ।
१३२७ त्यक्तं हीनं विधुतं समुज्झितं धूतं उत्सृष्टम् । (Abandoned)
१३२८ पर्येषणा परीष्टिश्चान्वेषणा च गवेषणा । (Search)
१३२९ निर्जितेन्द्रियग्रामो यतियतिनौ द्वयातिगः । (Ascetic)
१३३० स्थाण्डिलः स्थाण्डिलशायी अनशने पुमान् प्रायः । (Fast)
१३३१ कष्टं च कृच्छ्रं चाभीलं स्यादरुन्तुदे मर्मस्पृक् । (Physical pain)
१३३२ तपस्वी तापसः पारिकांक्षी वाचंयमो मुनिः ।

१३३३ व्रज्याटाट्या पर्यटनं चर्या त्वीर्यापथेस्थितिः । (Wandering)
१३३४ प्रलोभात्सा मिथ्येर्यापथकल्पना स्यात्कुहना । (Hypocricy)
१३३५ याचनार्थिनौ याचनके वनीयकमार्गणौ । (Beggar)
१३३६ भिक्षु परिव्राट् कर्मन्दी पाराशर्यपि मस्करी ।
१३३७ लब्धं प्राप्तं विन्नं भावितमासादितम् भूतं च । (Obtained)
१३३८ भैक्षं भिक्षाकदम्बकम् कुण्डी त्वस्त्री कमण्डलुः । (Alms)
१३३९ स्याद्ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ।
१३४० मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट् । (Kshatriya)
१३४१ क्षत्रिया स्त्री क्षत्रियाणी पुंयोगे स्यात्तु क्षत्रियी ।
१३४२ राजा राट् पार्थिवः क्ष्माभृन्महीभृत्भूपश्च नृपः । (King)
१३४३ मण्डलेश्वरेऽभिषिक्ता सा महिषी भोगिन्योऽन्याः । (Queen)
१३४४ प्रणताशेषसामन्तोऽधीश्वरश्च चक्रवर्ती । (Emperor)
१३४५ सार्वभौमः स सम्राट् च येनेष्टं राजसूयेन ।
१३४६ क्लीबे प्रधानं प्रमुखप्रवेकानुत्तमोत्तमाः । (Chief)
१३४७ मुख्यवर्यवरेण्याश्च प्रबर्होऽनवरार्घ्यवत् ।
१३४८ परार्घ्याग्रप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम् ।
१३४९ अप्राग्र्यं द्वयहीने द्वे अप्रधानोपसर्जने । (Secondary)
१३५० असारं फल्गु शून्यं तु वशिकं तुच्छरिक्तके । (Insignificant)
१३५१ राट्क्षत्रिययोर्गणे राजकराजन्यके क्रमात् ।
१३५२ नाट्योक्तौ राजा भट्टारको देवः कृताभिषेका । Dramatic terms
१३५३ स्याद्देवीतरासु भट्टिनी युवराजः कुमारः ।
१३५४ भर्तृदारकः भर्तृदारिका कुमारी राष्ट्रियः ।
१३५५ स्याद्राजश्यालः जनकोऽऽवुकः माताम्बा बाला तु ।
१३५६ वासूः अत्तिका भगिनी ज्येष्ठा आवुत्तस्तत्पतिः ।

१३५७ हण्डे हंजे हलाह्वानं नीचां चेटीं सखीं प्रति ।
१३५८ मारिष आर्यो भावो विद्वान् नटे तु जायाजीवः । (Actor)
१३५९ शैलाली कृशाश्वी शैलूषः चारणे कुशीलवः । Wandering actor
१३६० स्त्रीवेषधारी गणिकांजुका निष्ठा निर्वहणम् । (Catastrophe)
१३६१ आर्यावर्तः पुण्यभूमिः मध्यं विन्ध्यहिमालयोः । (Aryavarta)
१३६२ प्रत्यन्तो म्लेच्छदेशः देशस्तु नीवृज्जनपदौ । (Realm)
१३६३ विषयश्चोपवर्तनं पर्यन्तभूः परिसरः ।
१३६४ पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम् । (City)
१३६५ स्थानीयं निगमः शाखानगरं स्यात्ततो बहिः । (Suburb)
१३६६ स्याच्चयो वप्रमास्त्रियां प्राकारो वरणः सालः । (Rampart)
१३६७ रथ्या प्रतोली विशिखा संसरणं घंटापथः । (Main road)
१३६८ उपनिष्करं पद्धतिः पद्यावर्तन्येकपदी । (Foot-path)
१३६९ अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः । (Road)
१३७० सरणिश्चातिपन्थाः सुपन्थाः सत्पथः स्वध्वनि ।
१३७१ अपन्थास्त्वपथं विपथः स्यात्कापथः कदध्वा । (Bad road)
१३७२ दुरध्वो व्यध्वश्च कान्तारं यत्तद्वर्त्म दुर्गमम् । (Impassable)
१३७३ अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि । (Traveller)
१३७४ शृंगाटकं चतुष्पथं दूरशून्योध्वा प्रान्तरम् । (Cross-roads)
१३७५ गव्यूतिः स्त्री क्रोशयुगं नल्वः किष्कुचतुःशतम् । (400 cubits)
१३७६ दूरं स्याद्विप्रकृष्टकं स्यातां सुदूरे दवीयः । (distant)
१३७७ दविष्ठं च दीर्घं त्वायतं समीपे संनिकृष्टम् । (Long, near)
१३७८ निकटासन्न-सनीड-सदेशाभ्याशसविधाः ।
१३७९ समर्यादोपकण्ठान्तिकाभ्यर्णाभ्यग्राप्यभितः ।
१३८० नेदीयं च नेदिष्ठं च उभेऽप्यन्तिकातिशये । (Nearer, &c)

१३८१ राजन्वान्तु सुराज्ञिदेशे ततोऽन्यत्र राजवान् । Well-governed
१३८२ प्रक्रिया त्वधिकारः स्यान्नृपासनं भद्रासनम् । (Royal insignia)
१३८३ सिंहासनं हैमं छत्रं त्वातपत्रं प्रकीर्णके ।
१३८४ स्याच्चामरं भद्रकुम्भः पूर्णकुम्भः किरीटं च ।
१३८५ मुकुटं च भृंगारः कनकालुका नृपलक्ष्म । (Golden anointing vessel)
१३८६ वैतालिका बोधकराश्चाक्रिका घाण्टिकार्थकाः । (Bard)
१३८७ स्युर्मागधास्तु मगधाः वन्दिनः स्तुतिपाठकाः ।
१३८८ ईलितशस्तपणायितपनायित प्रणुताः । (Praised)
१३८९ पणितपनितगीर्णवर्णिताभिष्टुतेडिताः ।
१३९० स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानि च ।
१३९१ राज्यांगानि मन्त्री धीसचिवोऽमात्यः महामात्राः । (Prime minister)
१३९२ अन्येऽपि कर्मसचिवाः अध्यक्षाधिकृतौ समौ । (Executives)
१३९३ भौरिकः कनकाध्यक्षः रूप्याध्यक्षस्तु नैष्किकः ।
१३९४ अन्तःपुरे सौविदल्लः कञ्चुकी सौविदः षण्ढः । (Seraglio servants)
१३९५ वर्षवरश्च प्रतीहारद्वारपालदर्शकाः । (Door-keeper)
१३९६ द्वाःस्थद्वाःस्थितौ रक्षिवर्गेऽनीकस्थः सेवकोऽर्थी । (Army sentinel)
१३९७ अनुजीवी परतन्त्रश्च पराधीनः परवत् । (Servant, dependent)
१३९८ नाथवानधीननिघ्नायत्ताऽस्वच्छन्दो गृह्यकः ।
१३९९ भृत्यदासेरदासेय-दासगोप्यकचेटकाः ।
१४०० नियोज्यकिंकरप्रैष्य-भुजिष्यपरिचारकाः ।
१४०१ पराचितपरिस्कन्द-परजात-परैधिताः ।
१४०२ स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः । (Independent)
१४०३ स्थायुकोऽधिकृतो ग्रामे गोपो ग्रामेषु भूरिषु । (Village chief)
१४०४ गोपायितं गुप्तं रक्षितं त्रातं त्राणमवितम् । (Protected)

१४०५ प्राड्विवाकोऽक्षदर्शक-कारणिक-परीक्षकाः । (Judge)
१४०६ चौरैकागारिकस्तेनदस्यु-तस्कर-मोषकाः । (Thief)
१४०७ प्रतिरोधि-परास्कन्दि-पाटच्चरमलिम्लुचाः ।
१४०८ चौरिका स्तैन्यचौर्यौ च स्तेयं लोप्त्रं तु तद्धने । (Theft)
१४०९ आगोऽपराधो मन्तु संप्रधारणा समर्थनम् । (Crime, defence)
१४१० उपधा धर्माद्यैः परीक्षणं युक्तमौपयिकम् । (Fair, adequate)
१४११ आज्ञाववादो निर्देश-निदेशौ शासनं शिष्टिः । (Order)
१४१२ निकृतो विप्रकृतोऽधिक्षिप्तप्रतिक्षिप्तौ समौ । (Humbled)
१४१३ प्रग्रहोपग्रह प्रतियत्नाः बन्धस्थानं कारा । (Arrest, jail)
१४१४ उद्दानबन्धने कीलितसंयतौ दापिते तु । (Jailed, fined)
१४१५ साधितः द्विपाद्यो द्विगुणो दण्डः कश्यः कशार्हः ।
१४१६ शिरच्छेद्यो वध्यः विषेण विष्यः एवं मुसल्यः ।
१४१७ निष्कासितोऽवकृष्टो निरस्तस्तु स प्रत्यादिष्टः । (Externed)
१४१८ प्रत्याख्यातनिराकृतौ अपध्वस्तस्तु धिक्कृतः । (Disgraced)
१४१९ लिपिकारोऽक्षरचणोऽक्षरचुञ्चुश्च लेखके । (Clerk)
१४२० लिखिताक्षरविन्यासे लिपिर्लिबिरुभे स्त्रियौ । (Alphabet)
१४२१ स्यात्सन्देशहरो दूतो दूत्यं तद्भावकर्मणी । (Messenger)
१४२२ प्रकृतयः पौराणां श्रेणयः मित्रं सखा सुहृत् । (Subject, friend)
१४२३ वयस्यः स्निग्धः सवया अन्वगन्वक्षमनुगः । (Follower)
१४२४ अनुप्लवः सहायश्चानुचरोऽभिसरः समाः । (Aide-de-camp)
१४२५ सख्यं साप्तपदीनं वह्नितोयादि भूपां भयम् । (Alliance)
१४२६ स्वपक्षजं चादृष्टं दृष्टं स्यात्तु परचक्रजम् ।
१४२७ रिपौ वैरि सपत्नारिद्विषद्द्वेषणदुर्हृदः । (Enemy)
१४२८ द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः ।

१४२९ अभिघातिपरारातिप्रत्यर्थि-परिपन्थिनः ।
१४३० प्रभावोत्साहमन्त्रजाः शक्तयः कोषदण्डजम् ।
१४३१ तेजः प्रभावश्च प्रतापः गूढपुरुषश्चारः । (Majesty, spy)
१४३२ चरः स्पशो यथार्हवर्णः प्रणिधिरपसर्पः ।
१४३३ आप्तः प्रत्ययितः विस्रम्भो विश्वासोऽषडक्षीणः । (Faith)
१४३४ यस्त्रितीयाद्यगोचरः रहस्ये रहश्चोपांशु । (Secret)
१४३५ विविक्तविजनच्छन्न-निःशलाकास्तथा रहः । (Solitary)
१४३६ संकटं ना संबाधः संकीर्णं कलिलगहने । (Crowded)
१४३७ संकुलाकीर्णे सामदाने भेददण्डावुपायाः ।
१४३८ सामसान्त्वं प्राभृतप्रदेशनोपायनोपदाः । (Appeasement, gift)
१४३९ उपग्राह्यमुपहारः सुदायो हरणमन्यत् ।
१४४० भागधेयः करो बलिः घट्टादिदेयं शुल्कोऽस्त्री । (Tribute, toll)
१४४१ भेदस्तूपजापः तथा दमश्च साहसो दण्डः । Threat, punishment
१४४२ सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः ।
१४४३ विग्रहेऽस्त्रियां समरकलहानीकरणाश्च । (Strife)
१४४४ युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् । (War)
१४४५ मृधमास्कन्दनं संख्यं समीकं सांपरायिकम् ।
१४४६ संप्रहाराभिसंपात कलिसंस्फोटसंयुगाः ।
१४४७ अभ्यामर्दसमाघात-संग्रामाभ्यागमाहवाः ।
१४४८ संयत्समित्याजिसमिद्युधः स्त्रियः बाहुयुद्धे । (Close fight)
१४४९ स्यान्नियुद्धं प्रसभं तु बलात्कारश्चापि हठः । (Forcibly)
१४५० याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः । (Chariot)
१४५१ पुष्परथस्त्वसमरे क्लीबेऽनः शकटश्चास्त्री । (Cart)
१४५२ रथ्या रथकट्याऽपि वृन्दे रथाङ्गमपस्करः । (Chariot parts)

१४५३ रथाङ्गमेव चक्रं प्रधिर्नेमिःस्त्री वरूथस्तु ।
१४५४ रथगुप्तिः गन्त्री कम्बलिवाह्यकं दोला प्रेंखा । (Ox-cart, litter)
१४५५ शिविकाद्याः याप्ययानं पारंपरं वैनीतकम् ।
१४५६ सर्वं स्याद्वाहनं यानं युग्यं पत्रं च धोरणम् । (Vehicle)
१४५७ यानं रणे त्वभिक्रमः आततायी वधोद्युतः । (Attack)
१४५८ यत्सेनयाभिगमनमरौ तदभिषेणनम् । (Armed attack)
१४५९ स्यादासारः प्रसरणम् प्रचक्रं चलितार्थकम् ।
१४६० यात्रा व्रज्याऽभिनिर्याणम् प्रस्थानं गमनं गमः । (Travel)
१४६१ आस्था त्वासना स्थितिः निर्वेशः शिविरं सज्जनम् । (Camp)
१४६२ उपरक्षणं द्वैधे स्खलितं छलं विषयाश्रयौ । (Deceit, asylum)
१४६३ मर्यादा धारणा अंशो अंषो तथा यथोचितात् ।
१४६४ हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् ।
१४६५ आधोरणा हस्तिपका हस्त्यारोहा निषादिनः । (Mahout)
१४६६ वैश्याद्विजभवोऽम्बष्ठः स्यादश्वारोहाः सादिनः । (Horseman)
१४६७ नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः । Charioteer
१४६८ सेव्यब्रूदक्षिणस्थौ च संज्ञा रथकुटुम्बिनः ।
१४६९ रथिनः स्यंदनारोहाः रथिरा रथिकाश्च ते । (Car-warrior)
१४७० योध-योद्धृ-भटाः सेनासंगते सैन्य-सैनिकाः । (Soldier)
१४७१ सेनारक्षोऽपि सैनिकः सेनानीर्वाहिनीपतिः । (Commander)
१४७२ सेना वाहिनी पृतना ध्वजिन्यनीकिनी चमूः । (Army)
१४७३ वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम् ।
१४७४ परिधिस्थः परिचरः कञ्चुको वारबाणोऽस्त्री । (Coat-of-mail)
१४७५ सारसनमधिकाङ्गः तनुत्रं वर्म दंशनम् ।
१४७६ उरश्छदे कङ्कट-जगरकवचाः शिरस्त्रम् ।

१४७७ शीर्षण्यशीर्षके प्रतिमुक्तामुक्तौ पिनद्धश्च । Helmet, armoured
१४७८ सन्नद्धापिनद्धवर्मितसज्जव्यूढकङ्कटाः ।
१४७९ दंशिताश्च समे गणे वर्मभृतां कावचिकम् ।
१४८० पदातिपत्ति पदग पादातिक पदाजयः । (Footman)
१४८१ पद्गश्च पदिकश्च पत्तिसंहतः स्यात्पादातम् । (Infantry)
१४८२ पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरःसराः । (Leader)
१४८३ पुरोगमः पुरोगामी मन्दगामी तु मन्थरः ।
१४८४ तरस्वी त्वरितो वेगी प्रजवी जवनो जवः । (Fast walker)
१४८५ जंघालोऽतिजवात्यन्तीनो जंघाकर-जांघिकौ ।
१४८६ अहितान् प्रत्यभीतस्य रणे यानमभिक्रमः । (Aggression)
१४८७ सोऽभ्यमित्र्योऽभ्यमित्रीयोऽभ्यमित्रीणः शूरो वीरः ।
१४८८ विक्रान्तश्च सांयुगीनः कामंगाम्यनुकामीनः ।
१४८९ परस्परमहंकारे त्वहमहमिका च सा । (Rivalry)
१४९० अहंपूर्वमहंपूर्वमित्यहंपूर्विका स्त्रियाम् ।
१४९१ आहोपुरुषिका दर्पाद्याः स्यात्संभावनात्मनि । (Boast)
१४९२ सहोबलशौर्याणि शक्तिः स्थाम शुष्मं पराक्रमः । (Valour)
१४९३ वीरपाणं तु यत्पानं वृत्ते भाविनि वा रणे ।
१४९४ प्रहरणे शस्त्रास्त्रायुधानि वा ना धनुश्चापे । (Weapon, bow)
१४९५ धन्व शरासन कोदण्डकार्मुकं इष्वासश्च ।
१४९६ गुणोऽस्य मौर्वी ज्या शिंजिनी घातत्रे गोधातले । Bow-string
१४९७ धन्वी धनुष्मान् धानुष्को निषंग्यस्त्री धनुर्धरः । (Archer)
१४९८ पृषत्क बाण विशिखा अजिह्मग खगाशुगाः । (Arrow)
१४९९ कलंबमार्गण-शराः पत्री रोप इषुर्द्वयोः ।
१५०० प्रक्ष्वेडनास्तु नाराचाः विषाक्ते दिग्धलिप्तकौ । Poison-tipped

१५०१ पक्षो वाजस्त्रिषूत्तरे निरस्तः प्रहिते बाणे । (Discharged)
१५०२ नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः ।
१५०३ तूण्यां तूणोपासङ्ग तूणीर निषंगा इषुधिः । (Quiver)
१५०४ शराभ्यास उपासनं लक्ष्यं तु लक्षं शरव्यम् । (Target)
१५०५ कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खवत् । (Expert)
१५०६ काण्डवान् काण्डीरः निस्त्रिंशश्चन्द्रहासा सा रिष्टिः ।
१५०७ कौक्षेयको मण्डलाग्रः करवालः कृपाणवत् । (Sword)
१५०८ त्सरुः खड्गादिमुष्टौ स्यान्मेखला तन्निबन्धनम् । (Handle)
१५०९ स्यान्नैस्त्रिंशिकोऽसिहेतिः फलकोऽस्त्री फलं चर्म । (Shield)
१५१० संग्राहो मुष्टिरस्य यः स्याच्चर्मी फलकपाणिः ।
१५११ स्यादीली करवालिका परिघः परिघातिनः । (Cudgel)
१५१२ कोणे च स्त्रियः पाल्यश्रिकोटयः द्वयोः कुठारः । (Edge, axe)
१५१३ स्वधितिः परशुः परश्वधोऽस्मिन् पारश्वधिकः ।
१५१४ स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका । (Knife)
१५१५ शस्त्रमार्जोऽसिधावकः शाणस्तु निकषस्तथा ।
१५१६ निशित-क्ष्णुत-शातानि तेजिते शल्यं तु शंकुः । (Sharpened)
१५१७ स्यात्प्रासस्तु कुन्तः समौ प्रासिककौन्तिकौ तथा । (Spear)
१५१८ शस्त्राजीवे काण्डपृष्ठायुधीयायुधिकाः समाः । (Mercenary)
१५१९ ध्वजः केतनं पताका पताकी वैजयन्तिकः । (Banner)
१५२० व्यूहस्तु बलविन्यासः प्रत्यासारो व्यूहपार्ष्णिः । (array)
१५२१ सैन्यपृष्ठे प्रतिग्रहः संसक्तमभ्यवहितम् । (Thick-set)
१५२२ अपदान्तरे अनूनकं घनं निरन्तरं सांद्रम् ।
१५२३ स्यात्स्निग्धेऽपि च मेदुरं विरलं तद्विपर्ययः ।
१५२४ पत्तिस्तु एकेभैकरथा त्र्यश्वा पञ्चपदातिका । (Army units)

१५२५ पत्त्यंगैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ।
१५२६ सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ।
१५२७ अनीकिनी दशानीकिन्यक्षौहिणी सर्वौघे ।
१५२८ सर्वाभिसारः सर्वसन्नाहोऽवमर्दः पीडनम् ।
१५२९ अभ्यवस्कन्दनं त्वभ्यासादनं विपदापदौ । (Disaster)
१५३० विपत्त्यां संपत्संपत्तिः श्रीर्लक्ष्मीः जेयो जेतव्यम् । (Prosperity)
१५३१ जय्यस्तु जेतुंशक्ये जेता जिष्णुर्जैत्रजित्वरौ ।
१५३२ अजन्यं स्युरुत्पातोपसर्गोपरक्तोपप्लवाः । (Portent)
१५३३ आपन्नापत्प्राप्तः विहस्तव्याकुलाकुलव्यस्तः । (Bewildered)
१५३४ विक्लवाप्रगुणौ समुत्पिञ्जपिञ्जलौ त्वत्यर्थे ।
१५३५ अधीरे कातरस्त्रस्तो भीरु-भीरुक-भीलुकाः । (Coward)
१५३६ विलक्षो विस्मयान्वितः कान्दिशीको भयद्रुतः । (Fugitive)
१५३७ प्रद्रावोद्द्रावसंद्रावसंदावा विद्रवो द्रवः । (Fleeing)
१५३८ अपक्रमोऽपयानं च समयादनिवर्तिनः । (Sworn warrior)
१५३९ ते संशप्तकाः विजयो जयनं जयः भङ्गस्तु । (Victory, defeat)
१५४० पराजयः पराजित-पराभूतौ परिभूते । (Vanquished)
१५४१ स्यात्त्ववगणितमवमतावमानिते च । (Humiliated)
१५४२ अवज्ञातो वैरशुद्धिर्निर्यातनं प्रतीकारः । (Revenge)
१५४३ सा वीराशंसनं युद्धभूमिर्याऽतिभयप्रदा ।
१५४४ प्रमापणं निबर्हणं निकारणं विशारणम् । (Slaughter)
१५४५ प्रवासनं परासनं निषूदनं निहिंसनम् ।
१५४६ निर्वासनं संज्ञपनं निर्ग्रन्थनमपासनम् ।
१५४७ निस्तर्हणं निहननं क्षणनं परिवर्जनम् ।
१५४८ निर्वापणं विशसनं मारणं प्रतिघातनम् ।

१५४९ उद्वासनप्रमथनक्रथनोज्जासनानि च ।
१५५० आलम्भपिञ्ज-विशरघातोन्माथवधा अपि ।
१५५१ स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः । (Death)
१५५२ अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनमस्त्रियाम् ।
१५५३ कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम् ।
१५५४ कुणपः शवं श्मशानं पितृवनं चिता चित्या । Funeral ground
१५५५ चितिश्चास्त्रियां स्याच्च जीवातुर्ना जीवनौषधम् ।
१५५६ आयुर्जीवितकाल एवं जीवश्चासुधारणम् ।
१५५७ आजीवो जीविका वार्ता वृत्तिर्वर्तन-जीवने । (Livelihood)
१५५८ कृषिः स्त्री पाशुपाल्यं वाणिज्यं कुसीदं वृत्तयः ।
१५५९ सेवा श्ववृत्तिरनृतं कृपिरुञ्छशिलं ऋतम् ।
१५६० कृषीवलः क्षेत्राजीवः कृपिकश्च स कर्षकः । (Farmer)
१५६१ गोपे गोपालगोसंख्य गोधुगाभीरवल्लवाः । (Cowherd)
१५६२ गवीश्वरे गोमान्गोमी स्याद्गोमहिष्यादिकम् ।
१५६३ पादबन्धनं गोकुलं तु गोधनं गवां व्रजे ।
१५६४ गोष्ठं गोस्थानकं तत्तु गौष्ठीनं भूतपूर्वकम् । (Deserted stable)
१५६५ समौ शिवककीलकौ पशुरज्जुस्तु दामनी । (Scratch post)
१५६६ धेनुष्या बन्धकेस्थिता स्याज्जाबालो ह्यजाजीवः । Pledged cow
१५६७ वाणिज्यं वणिज्या परिदानं च परीवर्तश्च । (Barter)
१५६८ नैमेयनिमयौ वाणिजो वैदेहको नैगमः । (Merchant)
१५६९ सार्थवाहश्च वणिक् पण्याजीवस्त्वापणिकः । (Shop-keeper)
१५७० सैव क्रयविक्रयिकः समौ विपणविक्रयौ । (Sale)
१५७१ आपणस्तु निषद्यायां विपणिः पण्यवीथिका । (Bazaar)
१५७२ मूलधनं नीवी परिपणः न्यासस्त्वुपनिधिः । (Capital)

१५७३ प्रतिदानं तदर्पणं संविदागूः प्रतिज्ञानम् । (Agreement)
१५७४ नियमाश्रवसंश्रवा अंगीकारोऽभ्युपगमः ।
१५७५ प्रतिश्रवश्च समाधिः सत्याकृतिः सत्यापनम् । Earnest money
१५७६ सत्यंकारः सत्यानृतं वणिग्भावः ऊरीकृते । (Acceptance)
१५७७ उररीकृतं संगीर्ण-विदित-समाहिताश्च ।
१५७८ विक्रेता स्याद्विक्रयिकः क्रायिकक्रयिकौ समौ । (Seller, buyer)
१५७९ क्रये प्रसारितं क्रय्यम् क्रेये क्रेतव्यं विक्रेयम् । (Spread out)
१५८० पणितव्यं च पण्यं मूल्यं वस्नश्च अवक्रयः । (Price)
१५८१ यौतवं द्रुवयं पाय्यं माने तुलाङ्गुलिप्रस्थैः । (Measure)
१५८२ तुला स्त्रियां पलशतं भारं स्याद्विंशतितुलाः । (Wg. balance)
१५८३ आचितो दशभाराः स्युः शाकटो भार आचितः । (Cart-load)
१५४८ परिमाणे स्युराढक द्रोण कुडव प्रस्थाद्याः ।
१५८५ पादस्तुरीयो भागः स्यादंशभागौ तु वण्टके । (Quarter)
१५८६ द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु । (Wealth)
१५८७ हिरण्यं द्रविणं द्युम्नमर्थ-रै-विभवा अपि ।
१५८८ अर्थप्रयोगस्तूद्धारः स्यादृणं पर्युदंचनम् । (Debt)
१५८९ उत्तमार्णाधमर्णौ द्वौ प्रयोक्तृ-ग्राहकौ क्रमात् । (Lender)
१५९० समे गुणिताहते च निदिग्धोपचितेत्यपि । (Multiplied)
१५९१ याचिताऽयाचितयोर्यथासंख्यं मृतामृते ।
१५९२ याच्ञयाप्तं याचितकं निमयादापमित्यकम् ।
१५९३ कुसीदिको वार्धुषिको वृद्ध्याजीवश्च वार्धुषिः । (Usurer)
१५९४ ऊरव्या ऊरुजा अर्या वैश्या भूमिस्पृशा विशः । (Vaisya)
१५९५ स्त्रियामर्या स्यादर्याणी तु भार्या ह्यर्यजन्मनः ।
१५९६ तथा शूद्री भार्या शूद्रस्य स्यात् शूद्रा जातिमात्रे ।
१५९७ आभीरी तु महाशूद्री जाति-पुंयोगयोः समा ।

१५९८ शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः । (Sudra)
१५९९ संकीर्णवर्णे चण्डालो ब्राह्मण्यां वृषलजातः । (Inter-castes)
१६०० विट्जातस्तस्यां वैदेहकः सूतस्तथा क्षत्रियात् ।
१६०१ मागधः क्षत्रियाविशोः अम्बष्ठोऽर्याद्विजन्मनोः ।
१६०२ माहिष्योऽर्या-क्षत्रिययोः क्षत्तार्यशूद्रयोः सुतः ।
१६०३ शूद्राक्षत्रिययोरुग्रः शूद्राविशोस्तु करणः ।
१६०४ रथकारस्तु माहिष्यात्करण्यां यस्य संभवः ।
१६०५ विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः । (Outcaste)
१६०६ निहीनोऽपसदो जाल्मः क्षुल्लकश्चेतरश्च सः ।
१६०७ निकृष्ट-प्रतिकृष्टार्वरेफयाप्यावमाधमाः ।
१६०८ कुपूय-कुत्सितावद्यखेटगर्ह्याणकाः समाः ।
१६०९ चण्डालप्लवमातंगदिवाकीर्तिजनंगमाः । (Tribes)
१६१० निषादश्वपचौ अन्तेवासिचाण्डालपुक्कसाः ।
१६११ भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः । (Woodsman)
१६१२ पक्कणः शबरालयः स्याद्घोषस्त्वाभीरपल्लिः । (Residence)
१६१३ व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः । (Hunter)
१६१४ आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम् । (Hunting)
१६१५ जीवान्तकः शाकुनिको द्वौ वागुरिक-जालिकौ । (Fowler)
१६१६ वैतंसिकः कौटिकश्च मांसिकश्च समं त्रयम् ।
१६१७ वीतंसस्तूपकरणं बन्धने मृगपक्षिणाम् । (Snare)
१६१८ उन्माथः कूटयन्त्रं स्याद्वागुरा मृगबन्धनी ।
१६१९ कैवर्ते दाश-धीवरौ बडिशं मत्स्यवेधनम् । (Fisherman)
१६२० आनायः पुंसि जालम् स्याच्छणसूत्रं पवित्रकम् । (Net)
१६२१ मत्स्याधानी तु कुवेणी शौण्डिको मण्डहारकः । (Fish-basket)
१६२२ शुण्डापानं मदस्थानं तदेव गञ्जा इत्यपि । (Tavern)

१६२३ मदमद्ये मदिरा सुरा च हलिप्रिया हला । (Liquor)
१६२४ परिस्रुद्वरुणात्मजा गन्धोत्तमा परिस्रुता ।
१६२५ प्रसन्नेरा कादम्बरी मध्वासको माधवकः । (Honey-scum)
१६२६ मधु माध्वीकं मैरेयमासवः सीधुर्मेदकः ।
१६२७ जगलश्च भक्षणेऽवदंशोऽभिषवः संधानम् । (Stimulant)
१६२८ स्यन्नं रीणं स्नुतं स्रुतं कारोत्तरं सुरामण्डः । (Yeast)
१६२९ आपानं पानगोष्ठिका मधुवारा मधुक्रमाः । (Carousing)
१६३० अनुतर्षणं सरकः चषकोऽपि पानपात्रम् ।
१६३१ द्यूतोऽस्त्री कैतवमक्षवती देवनास्तु पणाः । (Gambling, dice)
१६३२ पाशकाश्चाक्षाः पणोऽक्षेषु ग्लहः स्यात्प्रतिभुवः । (Stake)
१६३३ लग्नकाः सभिका द्यूतकारकाः द्यूतकृद्धूर्तः । (Bail, gambling)
१६३४ कितवोऽक्षधूर्तोऽक्षदेवी शारिफलेऽष्टापदम् । Gambler)
१६३५ शारिनये परिणायः प्राणिद्यूतं समाह्वयः । Betting on animals
१६३६ स्रस्तं ध्वस्तं भ्रष्टं स्कन्नं पन्नं च गलितं च्युतम् । (Dropped)
१६३७ आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितमुन्नमुत्तम् । (Wet)
१६३८ ग्रंथितं संदितं दृब्धं दृढसंधिस्तु संहतः । (Tied, joined)
१६३९ संयोजित उपाहितः स्यादतिशयस्तु भरः । (Excessive)
१६४० अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम् ।
१६४१ तीव्रैकान्तनितान्तानि गाढबाढदृढानि च ।
१६४२ क्षेपिष्ठ-क्षोदिष्ठप्रेष्ठवरिष्ठस्थविष्ठ-बंहिष्ठाः । (Superlative of)
१६४३ क्षिप्रक्षुद्राभीप्सितपृथुपीवरबहुलेषु । (Quick, &c.)
१६४४ साधिष्ठद्राघिष्ठस्फेष्ठगरिष्ठह्रसिष्ठवृन्दिष्ठाः ।
१६४५ स्युर्बाढायतबहुगुरुवामनवृन्दारके ।
१६४६ वृन्दे ग्रामता जनता सहायता मानुष्यकम् । (Collection)
१६४७ औपगवकं माणव्यं वाडव्यं ब्राह्मण्यं तथा ।

१६४८ हल्या धूम्या पाश्या गल्या खल्या तु खलनीत्यपि ।
१६४९ द्वे पर्शुकानां पृष्ठानां पार्श्वं पृष्ठ्यमनुक्रमात् ।
१६५० आपूपिकं शाष्कुलिकमित्याद्याः स्युरचेतसाम् ।
१६५१ अहहेत्यद्भुते खेदे हा विषादशुगार्तिषु । (Interjections)
१६५२ खेदानुकम्पासंतोषविस्मयामन्त्रणे बत ।
१६५३ हन्त हर्षेऽनुकम्पायां वाक्यारम्भविवादयोः ।
१६५४ अमा सहसमीपे च आराद्दूरसमीपयोः । (With, near-far)
१६५५ समीपोभयतः शीघ्रसाकल्याभिमुखेऽभितः ।
१६५६ समन्ततस्तु परितः सर्वतो विष्वगित्यपि । (All-about)
१६५७ सामि त्वर्धे जुगुप्सिते व्यर्थके तु वृथा मुधा ।
१६५८ मृषा मिथ्या च वितथे मिथोऽन्योन्यं रहस्यपि ।
१६५९ नाम प्राकाश्यसंभाव्य-क्रोधोपगम-कुत्सने ।
१६६० तूष्णीमर्थे सुखे जोषं प्राध्वमानुकूल्यार्थकम् । (Favourably)
१६६१ ननु च स्याद्विरोधोक्तौ प्रसह्य तु हठार्थकम् ।
१६६२ प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु ।
१६६३ पृथग्विनान्तरेणर्ते हिरुङ्नाना च वर्जने ।
१६६४ सार्धं तु साकं सत्रा समं सह जातु कदाचित् । (With, once)
१६६५ मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः ।
१६६६ चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः । (For long)
१६६७ उषा रात्रेरवसाने प्रगे च प्रातः प्रभाते । (At dawn)
१६६८ एतर्हि संप्रतीदानीमधुना सांप्रतं तथा । (Now)
१६६९ किंचिदीषन्मनागर्थे क्षेमपुण्यादौ स्वस्त्याशीः । (Little)
१६७० मङ्गलानन्तरारम्भ प्रश्नकार्त्स्न्येष्वथो अथ ।
१६७१ उपरमारत्यवरतिविरतयो विरामः । (Retiring)

ब्रह्मार्पणमस्त्वियं कृतिः

# BENEDICTION

*Vedanta Vidwan* **Dr. N. S. Anantharangachar**, Bangalore, writes:

While beginning the study of Samskrit, the student was required to learn by heart the "Amarakosha" which contains almost all words necessary for understanding literature; but this is not prevalent now. Ability in any language depends upon one's command over vocabulary and it is ever desirable to enrich one's vocabulary power.

The original "Amarakosha" contains about 1,600 slokas, and it is not possible now for an ordinary student to commit it to memory. Scholars have therefore devised a number of ways by means of which the essentials of the "Amarakosha" can be imbibed by the modern student.

The present attempt by the Vidya Dana Samiti is such a one which deserves all commendation. 1,671 lines have been selected from the "Amarakosha", formed and presented in this work. The English equivalents are given in brackets by the side of the lines to enable the student to know the meanings. A "Topics" list is also provided to make the reference easy. The earnestness and sincerity of the Vidya Dana Samiti in assisting the modern student are praiseworthy. This is a useful publication which serves its laudable purpose in its own way, and I wish and hope that the maximum benefit will be derived from this book by our students.

*Vidyavibhushana Vidyasagara* **Sri M. P. L. Sastry,** Bangalore-3, writes:

The Namalinganusasanam of Amarasimha, otherwise popularly known as Amarakosa, is at the top of all Sanskrit lexicons. There are about forty commentaries on this. This work formed the first and almost the most important book that was required to be committed to memory by the students in earlier years. This was considered to be essential to have grasp over Sanskrit vocabulary.

This work is divided into three kandas or sections, which are further divided into vargas.

"Amarakosa Sangraha" is an abridgment of the text for the benefit of those that desire to have some knowledge of Sanskrit and have familiarity with Sanskrit words. The original work is scientifically analysed here and words are arranged according to topics which come up in one's daily life.

The Vidya Dana Samiti has done an excellent job in bringing out this fine abridgment for the benefit of those that desire to learn Sanskrit. This would make their efforts easier. The Editor who has remained incognito deserves our sincere thanks and congratulations.

**Sri S. Ramachandra Sastry,** M.A., *Reader in Sanskrit,* Government Arts College, Bangalore, writes:

I have read the 'अमरकोश-सङ्ग्रहः'—बालक्रीडा-रचना—published by the Vidya Dana Samiti, Seshadripuram, as its maiden publication. The book is a very useful one, especially to young boys. The Samithi has done a laudable job in collecting useful subjects from the Amara-kosha and grouping them under various headings for easy understanding by the young. The English translation has added to the value of the book. It has been made easy for the young in this book to remember easily the synonyms of the words. This attempt of the Samithi stands amply rewarded, if this abridgment evinces interest in the readers for a study of the original Amara-kosha. The Samithi deserves congratulations in bringing out this useful book.

**Sri H. S. Varadadesikachar,** *Head of the Sanskrit Department,* National College, Basavangudi, Bangalore-4, writes :

All lovers of culture would express their unstinted appreciation of an invaluable gift of the Vidya Dana Samiti in the form of an excellent book called Amarakosa Sangraha. As clearly suggested by the title, it is a well edited epitome of the well known Samskrita lexicon Amarakosa, intended especially for the benefit and delight of children and modelled on the work Amarasara which is out of print.

The remark of the editors that mothers can easily bring up their babies as cultured citizens of this great country by spending with them some delightful fifteen minutes every evening to make them memorize the lines of this text without taxing them, is a practical piece of advice though couched in a coaxing language. It dispels the apprehension that learning Sanskrit is a hard nut and impresses the fact that a little labour of love done during childhood will pay a life-long dividend in the form of sweetness and light.

Though the book is intended for children, the general readers also can make cultural capital out of it and learned men also find it useful as a recapitulatory lesson and appreciate the humble and honest claim of the editors in the preface regarding the usefulness of the book to all classes of readers.

Only essential words in the original have been chosen in the abridgment, but the vocabulary supplied by it is sufficient to understand the classics among Kavyas as well as elementary works among Sastras. The topics are properly arranged and word meanings are put in the right places without giving room for confusion; and the keys to genders and other suggestions in the preface are clear though precise. The get-up of the book is good. The book can be recommended as a text book for the Primary and Kavya standard examinations in Sanskrit............

May the work, by the blessings of the deity invoked in the initial verse, receive encouragement and help from all lovers of

Sanskrit which is the language of other innumerable languages nursed and mothered by it and enable them to enjoy the sweet and happy fruit of the devoted works of the Samiti in the form of many more books following this.

*Sahityalankara Kavibhushana* **Dr. K. S. Nagarajan,** B.Sc., Ph.D. writes:

I have gone through with pleasure the Amarakosa Sangraha abridged and sequelised for Baby's Delight by Vidya Dana Samiti Workers Panel. I heartily congratulate the Panel for bringing out such a useful and delightful novel abridged edition of the most popular Kosa in Sanskrit literature. The rearrangement of the lines in the Amarakosa is not only [illegible] but also well brought out. It is indeed the [illegible] love and will certainly create in the hear[illegible] unbounded love for Sanskrit, the [illegible] entire culture of our country is embedded [illegible] child will be able to memorize the lines [illegible] any effort on its part. Every home [illegible] a copy of this novel and priceless book. I [illegible] the Vidya Dana Samiti in their various efforts [illegible] popular in the world of children